Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 29.

# तैत्तिरीयारण्यकम्.

## भट्टभास्करभाष्यसहितम्.

THE

001104

# TAITTIRÍYA ÁRAṆYAKA

WITH THE

COMMENTARY OF BHAṬṬABHÁSKARAMIŚRA

**Vol. III.**

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*First Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of
His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1902.

# आरण्यके—सप्तमप्रपाठके.

—o—



*माधवीये तु—औद्गात्रसामप्रतिनिधिमन्त्र इति दृश्यते.

# अष्टमप्रपाठके.

———o———





श्रीः.

# तैत्तिरीयारण्यके.

## सप्तमः प्रपाठकः.

॥ हरिः ओं ॥

नमोऽनुंमदन्तु ॥ ओं शान्तिश्शान्तिश्शान्तिः ॥

[1]नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो

---

[1]अथ शौक्रियं काण्डमारभ्यते । आरण्यकत्वात् अस्मिन्प्रदेशे मन्त्रब्राह्मणयोराम्नानम् । उभयं सोमार्थेयम् । तत्रादौ शान्तिमुपयन्ति—नमो वाच इति ॥ नमो वाचे वेदात्मिकायै मन्त्रात्मने ब्राह्मणात्मने च । या च अस्माभिः उदिता उक्ता अधीता । या च अनधीता तस्यै सर्वस्यै वाचे नमः । अथ नमो वाचे वागभिमानिन्यै सरस्वत्यै देव्यै नमः । अथ नमो वाचस्पतये ब्रह्मणे । अथ नमः ऋषिभ्यः द्रष्टृभ्यः मन्त्रकृद्भ्यः मन्त्राणां द्रष्टृभ्यः । दर्शनमेव कर्तृत्वं वेदस्य कर्तुरस्मरणात् * । मन्त्रपतिभ्यः मन्त्रदेवताभ्यः ते च मन्त्रकृतो म-

---

* वेदस्याकर्तृत्वस्मरणात्.

मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपती-न्परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्य[2]श्शर्म मे द्यौश्शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । [3]भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै

---

न्त्रपतयश्च मा मां परादुः मा त्याक्षुः । अहं च तानुभयान् मा परादां मा त्याक्षम् । किञ्च—वैश्वदेवीं विश्वेषां देवानां सम्बन्धिनीं तेभ्यो हितत्वात् तादृशीमेव वाचं उद्यासं वदितुं समर्थो भूयासं शिवां सुखहेतुं अदस्तां अनुपक्षीणां देवेभ्यो जुष्टां प्रियाम् ॥

[2]शर्म मे द्यौरिति अनुष्टुप् ॥ द्युप्रभृतयोऽधुना शर्म सुखहेतवो भवन्तु मे तादृशीं वाचं वदतः ब्रह्मा स्रष्टा प्रजापतिः परमात्मा तावुभौ शर्म यच्छताम् ॥

[3]अतः परं अहं भूतं यथार्थमेव वदिष्ये वदिष्यामि । भुवनं सर्वभावभवन*साधनं तदनुकूलं वदिष्यामि तस्मै तादृशाय विशिष्टाय प्रयोजनाय अहमिदमुपस्तरणस्थानीयं कर्म उ-

---

* भावन.

पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं [4]मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिश्शान्तिश्शान्तिः ॥ १ ॥ १ ॥

[1]युञ्जते मनं उत युञ्जते धियः । विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रां दधे वयुनाविदेक इत् ।

---

पस्तृणे आरभे । उपस्तरणमास्तरः आसनाधारः । इदं च मे प्रजायै पशूनां उपस्तरणं भूयात् । अहं च प्रजायै पशूनां उपस्तरणं भूयासं अनेन कर्मणा । तथा वर्तमानं मां हे प्राणापानौ ! मृत्योः पातम् । मा च मा हासिष्टं मा त्याक्तं येनाहं मृत्योः रक्षितस्स्याम् ॥

[4]मधु मनिष्ये इत्यादि व्याख्यातं; 'वायुर्हिंकर्ता'* इत्यत्र ॥

इति सप्तमे प्रश्ने प्रथमोऽनुवाकः.

---

[1]प्रवर्ग्यं सम्भरिष्यन् सावित्रं चतुर्गृहीतं जुहोति—युञ्जते मन इति जगती ॥ व्याख्यातेयं 'युञ्जानः प्रथमम्'† इत्यत्र ॥

*सं. ३-३-२. †सं ४-१-१.

मही देवस्यं सवितुः परिष्टुतिः । [2]देवस्यं त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामादंदे । [3]अभ्रिरसि नारिरसि । अध्वरकृद्देवेभ्यः । [4]उत्तिष्ठ ब्रह्मणस्पते ॥ २ ॥ देवयन्तस्त्वेम-

[2]अभ्रिमादत्ते—देवस्य त्वा इति ॥

[3]अभिमन्त्रयते—अभ्रिरसीति ॥ उभयं व्याख्यातम्* । अभिमन्त्रणशेषः—देवेभ्यः देवार्थम् । अध्वरकृत् अध्वरकर्ता त्वमसि ॥

[4]ब्रह्माणमामन्त्रयते—उत्तिष्ठेति ॥ द्वे पथ्याबृहत्यौ । हे ब्रह्मणस्पते! परिबृढस्य कर्मणः पालक! उत्तिष्ठ देवकार्यार्थमुद्युक्तो भव । 'उदोऽनूर्ध्वकर्मणि' इति व्यत्ययेन न प्रवर्तते । यद्वा—उत्थानमवधानं ईहाऽभावा†दात्मनेपदाभावः । देवयन्तः देवानिच्छन्तः आराधनेन आत्मसात्कर्तुं प्रवृत्ता वयं त्वां ईमहे भजामहे, याचामह इति यावत् । देवशब्दात् क्यचि 'न छन्दस्यपुत्रस्य' इति ईत्वदीर्घाभावः । ई गतौ, दैवादिकः 'बहुलं छन्दसि' इति शपो लुक् ॥

अध्वर्युब्रह्माणौ उत्तरमर्धं जपतः—उपप्रयन्त्विति ॥ हे इन्द्र! त्वां उपप्रयन्तु उपसंप्राप्नुवन्तु मरुतः देवाः सुदानवः शोभनदानाः सुष्ठु संभाराणां दातारः । 'आद्युदात्तं द्व्यच्छन्दसि' इति

* सं. ४-१-१.

† ईहापदाभावा.

हे । उप॒प्रय॑न्तु म॒रुत॑स्सु॒दान॑वः । इन्द्र॑ प्रा॒शूर्भ॑वा स-
चा॑ । [5]प्रैतु॒ ब्रह्म॑ण॒स्पतिः॑ । प्र दे॒व्ये॑तु सू॒नृता॑ । अ-
च्छा॑ वी॒रं नर्यं॑ प॒ङ्क्तिरा॑धसम् । दे॒वा य॒ज्ञं न॑यन्तु नः ।
[6]देवी॑ द्यावापृथिवी॒ अनु॑ मे मꣳसाथाम् । [7]ऋ॒ध्यास॑-

---

उत्तरपदाद्युदात्तत्वं च । सचा तैस्समवेतः । सचेतः क्विपि 'सुपां-सुलुक्' इति प्रथमाया आकारः । प्राशूः प्रकर्षेण शीघ्रकार्येषु प्रवृत्तः प्रकृष्टो व्यापको वा भव । 'कृवापाजि' इत्युणप्रत्ययः । 'प्रादस्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[5]प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तस्स्युः—प्रैत्विति ॥ ब्रह्मणस्पतिः प्रैतु प्रथममग्रतो गच्छतु । देवी च सूनृता यज्ञात्मिका सत्या वाक् प्रैतु । देवाश्च नोऽस्माकं यज्ञमानयन्तु आभिमुख्येन अविघ्नेन वा प्रापयन्तु । वीरं यजमानं अस्मान्वा अच्छानयन्तु मृत्संपादनद्वारेण । यद्वा—हे इन्द्र! त्वां वीरं अच्छानयन्तु । मृदेव वा यजनसाधनत्वाद्यज्ञ उच्यते । मृदमस्मानच्छानयन्तु देवाः । नर्यं नरेभ्यो हितं पङ्क्तिराधसं धनादिपञ्चधनवन्तं पाङ्क्तानां वा पशूनां साधयितारम् । 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च ॥

[6]मृत्खननमभिमन्त्रयते—देवी इति ॥ हे देव्यौ ! द्योतनवत्यौ ! द्यावापृथिवी ! मे मम इदं कर्म मृत्खननलक्षणं अनुमंसाथाम् ॥

मद्य । [8]मखस्य शिरः ॥ ३ ॥ [9]मखाय त्वा । [10]मखस्य त्वा शीर्ष्णे । [11]इयत्यग्रं आसीः । [12]ऋध्यासंमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा

---

[7]मृत्खनेऽभ्रिं प्रहरन्ति—**ऋध्यासमद्येति** ॥ **अद्य** अस्मिन्खननादिने खननकर्मणि वा अहं **ऋध्यासं** अभिमतसम्पत्तिमान् भूयासम् ॥

[8]मृदमपादत्ते—**मखस्येति** ॥ **मखस्य** यज्ञस्य **शिरः** प्रवर्ग्यः शिरस्थानीयः तत्साधनत्वात् हे मृत् । तादृशीं त्वां अपाददे इति शेषः ॥

[9]महावीरकरणाय* हरति—**मखाय त्वेति** ॥ मखसाधनाय महावीराय **त्वां** हरामीति शेषः ॥

[10]कृष्णाजिने निवपति—**मखस्य त्वेति** ॥ **मखस्य** यज्ञस्य **शीर्ष्णे** प्रवर्ग्याय त्वां निर्वपामीति शेषः ॥

[11]वराहविहतमभिमन्त्रयते—**इयतीति** ॥ हे वराहविहते! मृत्! **अग्रे** कल्पादौ आदिवराहविहरणे **इयती** एतावन्महिमैव **आसीः**। यावती पृथिवी 'अस्याभिवाछम्बकरम्'* इति ब्राह्मणम् । यद्वा—इयती प्रादेशमात्री त्वं अग्रे यज्ञोपयोगात् प्राचीनकाले आसीः । इदानीं यज्ञोपयोगात् विश्वं त्वया व्याप्तमिति भावः ॥

[12]प्रहरणोपादानाहरणनिवपनमन्त्राः 'ऋध्यासमद्य' इत्यादयो व्याख्याताः ॥

---

*महावीरकरणेन.

शीर्ष्णे । [13]देवीर्वम्रीरस्य भूतस्यं प्रथमजा ऋताव-
रीः । ऋद्ध्यासंमद्य । मखस्य शिरः ॥ ४ ॥ म-
खायं त्वा । मखस्यं त्वा शीर्ष्णे । [14]इन्द्रस्यौजोंसि ।
ऋद्ध्यासंमद्य । मखस्य शिरः । मखायं त्वा । म-
खस्यं त्वा शीर्ष्णे । [15]अग्निजा अंसि प्रजापंते

[13]वल्मीकवपामभिमन्त्रयते—**देवीरिति** ॥ हे **देव्यः**! द्योतनवत्यः! **वम्रीः**! वम्र्यः! वमनादुदकस्य स्त्रीनाम्न्यः! **अस्य भूतस्य** वल्मीकवपात्मनः पृथिव्याः हे **प्रथमजाः**! प्रागाविर्भूताः! प्रधानार्थं वा जाताः! **ऋतावरीः**! उदकवत्यः! । 'छन्दसीवनिपौ' इति नित्ययोगे वनिपि 'वनोरच' इति ङीब्रेफौ । युष्माभिरुपचितामेतां वल्मीकवपामभिमन्त्रयामहे इति शेषः । प्रहरणादिमन्त्रा गताः ॥

[14]पूतीकानभिमन्त्रयते—**इन्द्रस्येति** ॥ श्यामा दूर्वाः पूतीकाः **इन्द्रस्य** यदो**जः** पराक्रमः तदेवासि । इन्द्रपराक्रमप्रभवत्वात् 'स यत्रयत्र पराक्रमत'* इत्यादि ब्राह्मणम् । ऋद्ध्यासमित्यादयः स्पष्टाः ॥

[15]अजलोमानि कृष्णाजिनलोमानि च संसृज्याभिमन्त्रयते—**अग्निजा इति** ॥ अग्नेर्जनयिता । अन्तर्भावितण्यन्तात् 'जनसन' इति विट्, पूर्ववदात्वम् । अजादिलोमसमुदाय उच्यते । यद्वा अग्निना सह जाता अजादयः अभेदेन तल्लोमसमुदाय उच्यते । प्रजापतेः

*आ. ८-२.

रेतः । ऋध्यासमद्य । मखस्य शिरः ॥ ५ ॥ मखाय त्वा । मखस्य त्वा शीर्ष्णे । [16]आयुर्धेहि प्राणं धेहि । अपानं धेहि व्यानं धेहि । चक्षुर्धेहि श्रोत्रं धेहि । मनो धेहि वाचं धेहि । आत्मानं धेहि प्रतिष्ठां धेहि । मां धेहि मयि धेहि । [17]मधु त्वा मधुलाकरोतु । [18]मखस्य शिरोसि ॥ ६ ॥ [19]य-

---

रेतः सारभूतः 'य एव रसः पशून् प्राविशत्'* इति ब्राह्मणम् । 'ऋद्ध्यासम्' इत्यादयो गताः ॥

[16]अश्वेन सम्भारानवघ्रापयति—आयुर्धेहीति ॥ आयुरादीनि अन्यूनानि मयि धेहि स्थापय, मह्यं वा धेहि । आत्मानं शरीरं स्थिरं धेहि । प्रतिष्ठां क्षेत्रादिं धेहि । मां च स्वदत्तानां आयुरादीनां भोगाय स्थापय । मय्येव आयुरादीनि धेहि मदधीनानि न परायत्तानि ॥

[17]सम्भारानजयाऽभिदोहयति मदन्तीभिश्चोपसृजति—मधु त्वेति ॥ मधु मन्तव्यं सारभूतं ब्रह्म तदेव त्वा त्वामजाक्षीरेण मदन्तीरूपेण मधुलाकरोतु मधुरीकरोतु । सिध्मादित्वात् लच् । छान्दसश्च च्व्यर्थे डाच् । कपिलकादित्वाल्लत्वविकल्पः ॥

[18]पिण्डं करोति—मखस्येति ॥ यज्ञस्य शिरः प्रवर्ग्यः तत्साधनमहावीरोपादानत्वात् पिण्डस्य यज्ञस्य शिरस्त्वम् ॥

---

*आ. ८-२.

ज्ञस्य॑ प॒दे स्थः । [20]गा॒य॒त्रेण॑ त्वा॒ छन्द॑सा करोमि । त्रैष्टु॑भेन त्वा॒ छन्द॑सा करोमि । जाग॑तेन त्वा॒ छन्द॑सा करोमि । [21]म॒खस्य॒ रास्ना॑ऽसि । [22]अदि॑तिस्ते॒ बिलं॑ गृह्णातु । पाङ्क्ते॑न॒ छन्द॑सा । [23]सूर्य॑स्य॒ हर॑सा श्राय । [24]म॒खोऽसि ॥ ७ ॥

---

[19]अङ्गुष्ठाभ्यां निगृह्णाति—यज्ञस्येति ॥ यज्ञस्यैव ह्येते पदे अङ्गुष्ठग्रहणे यज्ञस्यैव पदन्यासावेतौ नाङ्गुष्ठनिग्रहणमात्रे मन्तव्ये तादृशे युवां स्थः ॥

[20]प्रतिमन्त्रं महावीरान् करोति—गायत्रेणेत्यादिभिः ॥ हे महावीर ! त्वां गायत्रेण छन्दसा करोमि तदीयेन वीर्येण करोमि । एवमुत्तरत्र द्रष्टव्यम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम्' इति अण् । त्रिष्टुब्जगतीशब्दाभ्यां उत्सादित्वादञ् ॥

[21]रास्नां करोति—मखस्येति ॥ गतम् । रास्ना रशना ॥

[22]बिलं गृह्णाति—अदितिरिति ॥ अदितिरेव स्वयं ते बिलं गृह्णातु पाङ्क्तेन पशव्येन छन्दसा ॥

[23]उत्तरतस्सिकतासु प्रतिष्ठापयति—सूर्यस्येति ॥ सूर्यस्यैव हरसा तेजसा श्राय पक्वो भव । श्रै पाके ॥

पते शिरं ऋतावरीर् ऋद्ध्यासंमद्य मखस्य शिरश्शिरश्शिरोंसि नवं च ॥ २ ॥
इयंति देवीरिन्द्रस्यौजोंस्यग्निजा अस्यायुं धेंहि प्राणं पञ्च ॥

[1]वृष्णो अश्वंस्य निष्पदंसि । वरुंणस्त्वा धृतव्रंत आधूंपयतु । मित्रावरुंणयोर्ध्रुवेण धर्मणा । [2]अर्चि-

---

[24]अनुवीक्षते—मखोसीति ॥ यज्ञ एव त्वमसि प्रधानसाधनत्वात् ॥

इति सप्तमे प्रश्ने द्वितीयोऽनुवाकः.

---

[1]अश्वशकेन धूपयति—वृष्ण इति ॥ वृषा सेक्ता आदित्यः अश्वश्च आदित्योऽश्वः व्यापकत्वात् तस्मात्त्वं हे अश्वशक ! सूर्यस्यैव निष्पदसि निष्पत्तिरसि परिणामोसि योऽश्वस्यासि । यद्वा—आदित्यस्य निष्पत् अतिच्छन्दः तदेव त्वमसि वीर्यवत्त्वात् । त्वां तादृशमादाय । विभक्तिव्यत्ययो वा । त्वया वरुणो वारको देव आधूपयतु महावीरं धृतव्रतः स्थिरकर्मा मित्रावरुणयोः सम्बन्धिना ध्रुवेण अविचलितेन धर्मणा कर्मणा ॥

[2]गार्हपत्ये मुञ्जानादीप्योपोषति प्रतिदिशं, सर्वैर्वा सर्वतः—अर्चिषे त्वेत्यादिभिः ॥ अर्चिराद्यर्थं त्वां ज्वलयामीति शेषः । अर्चिर्दीप्तिः । शोचिश्शोषणम् । ज्योतिः द्योतनं रुचिः । तपः सन्तापः ॥

षे त्वा । शोचिषे त्वा । ज्योतिषे त्वा । तपसे त्वा। [3]अभीमं महिना दिवम् । मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ ८ ॥ [4]मित्रस्य चर्षणीधृतः । श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् । [5]सिद्ध्यै त्वा । [6]देवस्त्वा सवितोद्वपतु । सुपाणिस्स्वङ्गुरिः । सुबाहुरुत शक्त्या । [7]अपद्यमानः पृथिव्याम् । आशा दिश आपृण । उत्तिष्ठ

[3–5]मैत्र्योपचरति तप्यमानम्—अभीममिति ॥ गायत्रीयं ‘वसवस्त्वा धूपयन्तु’ इत्यत्र उखासम्भरणे व्याख्याता* । इह तु इममिति पुल्लिङ्गता विशेषः । तत्र त्विमामिति ॥†

[6]प्रथमकृतं महावीरं शफाभ्यां परिगृह्योद्वासयति—देवस्त्वेति गायत्र्या ॥ तत्रैव व्याख्याता* ॥

[7]उत्तरतस्सिकतासु प्रतिष्ठापयति—अपद्यमान इत्यनुष्टुभा ॥ व्याख्याता तत्रैव* । पुल्लिङ्गताऽत्र पदानां विशेषः ॥

*तै. सं. ४-१-६.

†अत्र मित्रस्येति ऋचः, सिद्ध्यै त्वेति यजुषश्च भाष्यं गलितं दृश्यते । माधवीये तु कल्पः—“पच्यमानान्मैत्र्योपचरत्यभीमं महिना दिवमित्युत्तरया वा” इति पूर्वऋचा सहास्या ऋचो वैकल्पिकत्वमुक्तम् । कल्पः—“पक्वेषु सिद्ध्यै त्वेति धृष्टिमादाय भस्मापोह्य” इति । हे महावीर! त्वां सिद्ध्यै समीचीनस्वरूपसिद्ध्यै महावीरगतभस्मापोहनसिद्ध्यर्थं त्वां स्वीकरोमीति शेषः इति भाष्यं माधवीयमिह द्रष्टव्यम् ॥

बृहन्भंव ॥ १ ॥ ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम् । [8]सूर्यस्य त्वा चक्षुषाऽन्वीक्षे। ऋजवे त्वा । साधवे त्वा । सुक्षित्यै त्वा भूत्यै त्वा । [9]इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि । [10]गायत्रेणं त्वा छन्दसाऽऽच्छृणद्मि । त्रैष्टुभेन त्वा छन्दसाऽऽ-

[8]अनुवीक्षते—सूर्यस्य त्वेति ॥ सूर्यस्यैव चक्षुषा अहं त्वा अन्वीक्षे नात्मीयेन । अतो मां मा धाक्षीः मा चान्धं कार्षीः । 'ईश्वरो वा एषोऽन्धो भवितोः '* इति । यागसाधनद्वारेण ऋज्वादिलोकस्थित्यर्थं त्वामन्वीक्षे । ऋजुः पृथिवी न तत्र कुटिलमस्तीति । व्यवधानाभावात् । साध्वन्तरिक्षं समीचीनस्वभावत्वात् स्वच्छत्वाच्च । सुक्षितिः द्युलोकः शोभनवासस्थानत्वात् । भूतिः दिशः सर्वार्थभवनाधारत्वात् । ' इयं वा ऋजुः '* इत्यादि ब्राह्मणम् ॥

[9]अथैनं सिकताभिः पर्यूहति—इदमिति ॥ अमुं अमुकनामानं आमुष्यायणं अमुकनाम्नोपत्यं यजमानं विशा प्रजया पशुभिः ब्रह्मवर्चसेन अहं पर्यूहामि परितः पूरयामि । इदमिति क्रियाविशेषणम् । अनेन सिकतापर्यूहणेनेति भावः । अन्ते ब्रह्मवर्चसानिर्देशात् त्रिभिरपि ब्राह्मणस्य, विशेत्येव राजन्यस्य, पशुभिरित्येव वैश्यस्य, सर्वैर्वा सर्वेषाम् ॥

[10]अजाक्षीरेणाच्छृणत्ति—गायत्रेण त्वेति ॥ गायत्रेण छन्दसा त्वा आच्छृणद्मि संदीपयामि सर्वतः । उ छृदिर् दीप्तिदेवनयोः ।

*आ. ८-३.

च्छृंणद्मि । जागंतेन त्वा छन्दसाऽऽच्छृंणद्मि । छृणत्तु त्वा वाक् । छृणत्तु त्वोर्क् । छृणत्तुं त्वा हविः । छृन्धि वाचंम् । छृन्ध्यूर्जंम् । छृन्धि हविः । [11]देवंपुरश्चर सध्यासं त्वा ॥ १० ॥

पृथिवीं भंव वाख्चंद्रं ॥ ३ ॥

एवं त्रैष्टुभेन जागतेन च छन्दसा । अथवा गायत्र्यादीनि त्वाऽऽच्छृन्दन्तु तत्सम्बन्धेन त्वं संदीप्तो भव । वाक् मन्त्रात्मिका ऊर्क् हविर्गतो रसः । हविः हविष्ट्वमापाद्यमानं द्रव्यम् । अथ त्वमपि वागादीनि छृन्धि त्वत्सम्बन्धेन तानि संदीप्तानि भवन्तु ॥

[11]अथैनां कृष्णाजिन उपनह्यासजति—देवपुरश्चरेति ॥ अग्रेण गार्हपत्यं दर्भान् संस्तीर्य तेषु महावीरानुपावहरति अनेनेति पक्षान्तरम् । कृष्णाजिने अप्रचरणीयौ महावीरावनेन उपावहरतीत्यन्यः पक्षः । प्रचरणीयं महावीरं शफाभ्यां परिगृह्य अच्युच्छिन्नाग्रेण[1] वेदेनोपरिष्टात् संमार्ष्टि अनेनेति पक्षोऽन्यः । देवपुरश्चर! देवानां पुरस्तात् गन्तः! ध्वज इव । यद्वा—भूमिष्ठोपि तेजसा देवानामग्रे चरति देवानामतिवल्लभतया वा सदा अग्रे वर्तमानं त्वां तादृशं महानुभावं अहं सध्यासं प्राप्तुं योग्यो भूयासम् । सध्यतिर्गतिकर्मा ॥

इति सप्तमे प्रश्ने तृतीयोऽनुवाकः.

---

[1]अपरिच्छिन्नाग्रेण.

[1]ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर । प्रस्तोतस्सामानि गाय । [2]यजुर्युक्तꣳ सामभिराक्तखं त्वा । विश्वैर्देवैरनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पारयिष्णुम् । स्तुभो वहन्तु सुमनस्यमानम् । स नो रुचं धेह्यहृणीयमानः । भूर्भुव-

---

[1]ब्रह्माणमामन्त्रयते—**ब्रह्मन्निति** ॥ **होतर्घर्ममभिष्टुहि** । इति एकपदा गायत्री ॥

[2]अथ—**यजुर्युक्तं** इति पञ्चपदा शक्करी यजुरन्ता ॥ उपांशूक्त्वा 'ओमिन्द्रवन्तः प्रचरत' इत्युच्चैरनुजानाति ब्रह्मा । महावीरस्स्तूयते—**यजुर्युक्तं** यजुर्भिर्मन्त्रैः संस्कारकैर्युक्तं संस्कृतं **सामभिः** गीतिभिः **आक्तखं** सामोपव्राज[1] समुपजातेन तेजसा व्याप्ताकाशं व्यक्ताकाशं वा **विश्वैर्देवैः** **मरुद्भिः** च **अनुमतं** अनुज्ञातं **दक्षिणाभिः** च चोदिताभिः **प्रततं** विस्तीर्णं **पारयिष्णुं** यज्ञस्याविघ्नेन समापयितारं **सुमनस्यमानं** सानुग्रहमनसं ईदृशं त्वां **स्तुभः** स्तोत्राणि **वहन्तु** प्राप्नुवन्तु । **स** च त्वं **अहृणीयमानः** केनचिदपि प्रकारेणाहीयमानः **नः** अस्मभ्यं **रुचं** दीप्तिं **धेहि** देहि **भूर्भुवस्सुवः** लोकत्रयव्यापि । अथ हे ऋत्विग्यजमानाः ! **ओं** लोकत्रयव्यापितेजसा अनेन इन्द्रेण ईश्वरेण महावीरेण तद्वन्तः

---

[1]सामोपचर.

स्सुवः । ओमिन्द्रवन्तः प्रचरत ॥ ११ ॥

अर्हणीयमानो द्वे च ॥ ४ ॥

[1]ब्रह्मन्प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । [2]यमाय त्वा मखाय त्वा । सूर्यस्य हरसे त्वा । [3]प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वाहा वाचे

---

प्रचरत यागं निर्वर्तयत ॥

इति सप्तमे प्रश्ने चतुर्थोऽनुवाकः.

[1]एवं त्वयाऽनुज्ञातानामस्माकं अयं प्रचरणकाल इति तद्बहुमानाय पुनरपि ब्रह्माणमामन्त्रयते—ब्रह्मन्निति ॥ प्रचारविधिपरत्वात् अत्र प्रवर्ग्येणेति नोक्तम् । होतरिति । तवायं घर्माभिष्टवनकाल इति तमवसरे बोधयितुं पुनर्वचनम् ॥

[2]सर्वं परिघर्ममभिपूर्वं त्रिः प्रोक्षति—यमाय त्वेति त्रिभिः ॥ यमोऽग्निः "अग्निर्वाव यमः"* इति । मखो वायुः परिस्पन्दरूपत्वात् । सूर्यस्य हरसे तेजसे मण्डलात्मने । 'एता वा एतस्य देवताः'† इति ब्राह्मणम् ॥

[3]आहवनीये स्रुवेण प्राणाहुतीरेकादश जुहोति—प्राणायेत्या-

---

*सं. ३-३-८.　　†आ. ८-४.

सरस्वत्यै स्वाहा । दक्षाय स्वाहा क्रतवे स्वाहा । ओजसे स्वाहा बलाय स्वाहा । [4]देवस्त्वा सविता मध्वाऽनक्तु ॥ १२ ॥ [5]पृथिवीं तपसस्त्रायस्व । (अर्चिषे त्वा । शोचिषे त्वा । ज्योतिषे त्वा । तपसे त्वा ।) [7]अर्चिरसि शोचिरसि ज्योतिरसि तपो-

---

दि ॥ गतम् । दक्षः उत्साहः क्रतुः संकल्पः ओजो दीप्तिः ॥

[4]स्रुवेणोपरि आहवनीये महावीरमनक्ति—देवस्त्वेति ॥ देवः सविता सर्वस्य प्रेरकः त्वां मध्वा मधुना मधुरेण अनेन आज्येन अनक्तु । नुमभावश्छान्दसः ॥

[5]अपरस्मिन्खरे राजतं रुक्मं निदधाति—पृथवीमिति ॥ महावीरसम्बन्धिनः तपसः दाहात् पृथिवीं त्रायस्व रक्ष ; यथा पृथिवीमयं न दहेत् तथा कुरु ॥

[6]द्वयान्मुञ्जप्रलवानादाय दक्षिणेषामग्राणि गार्हपत्ये प्रदीपयति—अर्चिषे त्वेति ॥ अर्चिः ज्वाला तदर्थं त्वां प्रदीपयामि अथ तेषामग्रैरुत्तरेषां मूलानि प्रदीपयति—शोचिषे त्वेति । शोचिः शोषणम् । अथ तेषां मूलैः दक्षिणेषां मूलानि प्रदीपयति—ज्योतिषे त्वेति ज्योतिर्दीप्तिः । अथ तेषां मूलैः उत्तरेषां अग्राणिं प्रदीपययि—तपसे त्वेति । तपस्सन्तापः ॥

---

( )षष्ठोऽयं मन्त्रः पाठक्रमे माधवीयभाष्ये च नास्ति.

सि । स॒ꣳ सी॑दस्व म॒हाꣳ अ॑सि । शोच॑स्व देव॒वीत॑मः । वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य । सृ॒ज प्र॑शस्त दर्श॒तम् । [9]अ॒ञ्जन्ति॒ यं प्र॒थय॑न्तो॒ न विप्राः॑ । व॒पाव॑न्तं॒ नाग्निना॒ तप॑न्तः । पि॒तुर्न पु॒त्र उ॒पसि॒ प्रेष्ठः॑ ।

---

[7]अथ तान् व्यत्यस्तान् उपरि रुक्मे निदधाति—**अर्चिरसि शोचिरसि ज्योतिरसि तपोसीति** ॥

[8]तेषु महावीरं प्रतिष्ठापयति—**संसीदस्वेति** पथ्याबृहत्या ॥ व्याख्यातेयं अग्निकाण्डे* देवस्य त्वेत्यत्र ॥

[9]स्रुवेण महावीरमनक्ति अभिपूरयति वा—**अञ्जन्ति यमिति** त्रिष्टुभा ॥ **विप्राः** मेधाविनः ऋत्विजः **यं** महावीरं**प्रथयन्तः न** विस्तारयन्त इव स्नेहेन देहस्याप्यायनमिव कुर्वन्तः **अञ्जन्ति** मृक्षयन्ति **वपावन्तं न** मेदस्वन्तं पशुमिव **अग्निना तपन्तः** रसपाकाय सोऽयं **घर्मः** प्रवर्ग्यः महावीरः **ऋतयन्** ऋतं यज्ञं यजमानेभ्यः कुर्वन् यज्ञमुत्पादयितुं त्वरमाणस्सन् **अग्निं आऽसादीत्** आभिमुख्येनासदत् आसीदतु । छान्दसो लुङ् । वर्णव्यत्ययः । **पितुर्न** पितुरिव **उपसि** उपस्थे उत्सङ्गे । तिष्ठतेर्गतिकर्मणः छान्दसोऽसुङ् । **प्रेष्ठः** प्रियतमः **पुत्रः** इवासीदतु । एवं विभक्तिमत्त्वमुपमानोपमेययोरयुक्तम् । एवं वा—अग्निमृतयन् ऋतवन्तं कुर्वन् आऽसीदत् अञ्जनेन ॥

---

*सं. ४-१-३.

आ घर्मो अग्निमृतयंन्नसादीत् ॥ १३ ॥ [10]अनाधृष्या पुरस्तांत् । अग्नेराधिंपत्ये। आयुर्मे दाः । पुत्रवंती दक्षिणतः । इन्द्रस्याधिंपत्ये । प्रजां मे दाः । सुषदां पश्चात् । देवस्यं सवितुराधिंपत्ये । प्राणं मे दाः । आश्रुतिरुत्तरतः ॥ १४ ॥ मित्रावरुंणयोराधिंपत्ये । श्रोत्रं मेदाः । विधृंतिरुपरिंष्टात् । बृहस्प-

---

अध्यधि महावीरमसंस्पृशन् यजमानः प्राञ्चं प्रादेशं धारयमाणो जपति—**अनाधृष्या पुरस्तादित्येतैः** यथालिङ्गम् । पूर्वैव दिक् पुरस्तात् । 'दिक्शब्देभ्यः' इत्यादिना प्रथमासमर्थादस्तातिः । पूर्वा दिक् **अनाधृष्या** केनचिदपि धर्षयितुमशक्या । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अनाधृष्यत्वे हेतुमाह—**अग्नेराधिपत्ये** रक्षःप्रभृतीनां हन्तुरग्नेराधिपत्यस्य विषयभूता प्राची दिक्, तस्मादनाधृष्या मरणादिभयरहिता सा तादृशी त्वं मे दीर्घं **आयुः दाः** देहि हे प्राचि! । एवमुत्तरत्र द्रष्टव्यम् । **पुत्रवती** बहुपुत्रा **दक्षिणा** दिक् । इन्द्रियस्य दातुः **इन्द्रस्याधिपत्य**विषयत्वात् । 'दक्षिणोत्तराभ्यामतसुच्' । **सुषदा** सुष्ठु अहिंसया प्राणानां सदनीया अभिगन्तव्या **पश्चात्** अपरा दिक् **सवितुः** अनुज्ञातुः **देवस्य आधिपत्य**विषयत्वात् । पश्चादित्यपरस्य निपात्यते । **आश्रुतिः** समन्ताच्छ्रूयमाणा प्रधाना दिक् **उत्तरा मित्रावरुणयोः** जगतां धारकयोः **आधिपत्य**विषयत्वात् । **विधृतिः** विविधानां ब्रह्मवर्चसादीनां धारणात् ऊर्ध्वा दिक् । 'उपर्युपरिष्टात्' इति निपात्यते ।

तेराधिपत्ये। ब्रह्म मे दाः क्षत्त्रं मे दाः। तेजो मे धा व
र्चो मे धाः। यशो मे धास्तपो मे धाः। मनो मे धाः।
11 मनोरश्वाऽसि भूरिपुत्रा। विश्वाभ्यो मा नाष्ट्राभ्यः
पाहि ॥१५॥ सूपसदा मे भूया मा मा हिꣳसीः।
12 तपोष्वग्ने अन्तराꣳ अमित्रान्। तपाशꣳसमररु-

---

बृहस्पतेः बृहतां गुणानां पत्युः आधिपत्ये वर्तमानत्वात्। त्वं मे ब्रह्म ब्रह्मवर्चसं क्षत्रं बलं ब्राह्मणक्षत्रियौ वा देहि। तेजःप्रभृतीनि पञ्च मे स्वभूतानि धेहि स्थापय आविनष्टानि कुरु ॥

[11]उत्तरतः पृथिवीमभिमृशति—**मनोरश्वासीति** ॥ पृथिवी उच्यते। ब्राह्मणं च—'इयं वै मनोरश्वा भूरिपुत्रा'* इति। **मनुः** प्रजापतिः तत्सम्बन्धिनी **अश्वा** व्यापनवती भोगहेतुर्वा **भूरिपुत्रा** बह्वपत्या देवमनुष्याणां धारयित्री ईदृशी त्वं **असि**। सा त्वं मां **विश्वाभ्यो नाष्ट्राभ्यः** नाशयित्रीभ्यः ईतिभ्यः **पाहि**। **सूपसदा** सुष्ठूपस्थेया उपचरितव्या अभिगम्या मम **भूयाः**। **मा** च **मां हिंसीः** उन्मादहेतुर्मा भूः। ब्राह्मणं च—'अस्यामेव प्रतितिष्ठत्यनुन्मादाय'* इति ॥

[12]गार्हपत्यादुदीचोङ्गारान्निरूहति—**तपोष्वग्न** इति त्रिष्टुभा ॥ हे **अग्ने**! प्रथमं **अन्तरान्** अभ्यन्तरान् **अमित्रान्** शत्रून् **तपोषु** सुष्ठु तपैव नाशयैव। उ अवधारणे। **अररुषः** आगतवन्तः। क्वसु-

---

*आ. ८-४.

षः परस्य । तपा वसो चिकितानो अचित्तान् । वि ते तिष्ठन्तामजरा अयासः । [13]चितस्स्थ परिचितः । स्वाहा मरुद्भिः परिश्रयस्व । [14]मा असि । प्रमा

नि रूपमुन्नेयम् । परस्य बाह्यस्य शत्रोः त्वामुपागतस्य अशंसं अस्तुतिं आक्रोशं तप नाशय । किञ्च—हे वसो! जगतां वासयितः! अस्माकं वा धनभूत! चिकितानः सम्यक् जानानस्सन् अचित्तान् चित्तहीनान् अस्निग्धान् तप नाशय । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् । तदर्थं ते तव अयासः अयनशीलाः गत्वरस्वभावाः ज्वालाः अजराः अश्रान्ताः वितिष्ठन्तां विश्वत्राप्रतिहतास्तिष्ठन्तु । 'समवप्रविभ्यस्स्थः' इत्यात्मनेपदम् ॥

[13]अङ्गारैः प्रदक्षिणं परिचिनोति—चितस्स्थेति ॥ हे अङ्गाराः! चितस्स्थ चेतव्यास्स्थ । अपि च परितः चेतव्याश्च स्थ तस्मान्मया परिचितः मया चेतव्याः तिष्ठत । अथ हे महावीर! त्वमपि स्वाहा स्वाहुत्यर्थं मरुद्भिः मरुत्तुल्यैः रश्मिभिः परिश्रयस्व परिवार्यात्मानं वर्तस्व । यद्वा—मरुद्भिः संदीपकैः रश्मिभिः आत्मानं परिश्रयस्व सर्वतः पावय । श्रिञ् पाके ; व्यत्ययेन शप् - ब्राह्मणं च—'असौ खलु वा आदित्यः प्रवर्ग्यः । तस्य मरुतो रश्मयः'* इति ॥

[14]वैकङ्कतैः परिधिभिः परिधत्तः—मा असीति प्राञ्चावध्वर्युर्निदधाति । प्रमा असीति उदञ्चौ प्रतिप्रस्थाता । एवमवशिष्टानां

*आ. ८-४.

असि । प्रतिमा असि ॥ १६ ॥ संमा असि । वि-
मा असि । उन्मा असि। अन्तरिक्षस्यान्तर्धिरसि।
[15]दिवं तपसस्त्रायस्व । [16]आभिर्गीर्भिर्यदतो न ऊ-
नम् । आप्यायय हरिवो वर्धमानः । यदा स्तोतृ-
भ्यो महि गोत्रा रुजासि । भूयिष्ठभाजो अध ते स्याम ।
[17]शुक्रं ते अन्यद्यजतं ते अन्यत् ॥ १७ ॥ वि-

---

पूर्वेणपूर्वेण मन्त्रेण अध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थाता । अध्वर्युरेव दक्षिणतस्त्रयोदशं निदधाति—**अन्तरिक्षस्यान्तर्धिरसीति** । मीयते परिच्छिद्यते अनुभूयत इति **मा** पृथिवी । कर्मणि क्विप् । यद्वा—मात्री निर्मात्री विश्वस्य । कर्तरि क्विप् । एवं सर्वत्र । प्रकर्षेण मीयत इति **प्रमा** अन्तरिक्षं प्रकर्षो महत्त्वादिः । प्रतीपं मीयत इति **प्रतिमा** द्यौः । एभिर्लोकैः सङ्गतं मीयत इति **संमा** दिशः । विविधं दिग्द्वयात्मना मीयत इति **विमा** कोणदिक् । ऊर्ध्वं मीयत इति **उन्मा** ऊर्ध्वा दिक् । **अन्तरिक्षस्यान्तः** मध्ये धारकः उत्तम्भनं त्वमसि हे त्रयोदश! अन्येभ्योपि विशिष्टोसि॥

[15]सौवर्णेन रुक्मेणापिदधाति—**दिवमिति** ॥ **तपसः** दाहात् महावीरात् **दिवं त्रायस्व** रक्षस्व यथाऽयं दिवं न दहेत् तथा कुरु । ब्राह्मणं च—'अमुष्या अनतिदाहाय'* इति ॥

[16–17]अभिमन्त्रयते—**आभिरिति** तिसृभिः त्रिष्टुग्भिः ॥ प्रथमा अच्छिद्रेषु व्याख्याता† । द्वितीया तु 'अग्ने यं यज्ञम्'‡ इत्यत्र ॥

---

*आ. ८-४. †ब्रा. ३-७-११. ‡सं. ४-१-११.

षुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावः। भद्रा ते पूषन्निह रातिरस्तु। [18]अर्हन्बिभर्षि सायकानि धन्व। अर्हन्निष्कं यजतं विश्वरूपम्। अर्हन्निदं दयसे विश्वमब्भुवम्। न वा ओ-

[18]अर्हन्निति तृतीया—हे देव! त्वमेव सायकानि धन्व धनुश्च अर्हन् तन्निमित्तां पूजां अधिगच्छन् बिभर्षि धारयसि। अन्येषामल्पशौर्याणां विडम्बनैव स्यात्। किञ्च—निष्कं आभरणजातं यजतं पूजितम्। औणादिकोऽतच्प्रत्ययः। विश्वरूपं विश्वाश्चर्यरूपं शोभितं त्वमेवार्हन् विभर्षि तवैतच्छोभामावहति अन्येषां त्वल्पकान्तीनां भार एव सः। किञ्च—इदं विश्वं कृत्स्नमपि अब्भुवं अद्भ्यस्सम्भूतं विकारजातं त्वमेवार्हन् दयसे रक्षसि अन्येषां त्वल्पशक्तीनां श्रम एव सः। दय दानगतिरक्षणेषु। अद्भ्यो भवतीत्यब्भुवम्। छान्दसः कः। तस्मात् हे रुद्र! घर्मात्मना स्थितत्वात् त्वत् त्वत्त ओजीयः ओजस्वितरं बलवत्तरं वा वस्तु न खल्वस्ति। ओजस्विशब्दादीयसुनि 'विन्मतोर्लुक्' 'टेः' इति टिलोपः। एवं ओजसा तुल्यस्य प्रतिषिद्धत्वात् न पुष्कला स्तुतिः। अथ ब्रूमः—त्वत्तोऽन्यत्किंचिदपि वस्तु लोके ओजीयो नास्ति त्वमेव ओजीयान्। त्वव्यतिरिक्तं सर्वं प्रकृष्यते। त्वमेव सर्वस्मादोजस्वितरः तस्मात्तुल्यः उत्कृष्टो भव। प्रतिषेधाद्देवस्योचिता पुष्कला स्तुतिः कृता भवति ॥

[19]पवित्राण्यादत्ते—गायत्रमसि इत्यादिभिः तिसृभिः॥ गायत्राद्यात्मना लोकत्रयात्मना त्रयाणां स्तुतिः ॥

जीयो रुद्र त्वदस्ति । [19]गायत्रमसि । त्रैष्टुभमसि ।
जागतमसि । [20]मधुमधुमधु ॥ १८ ॥

अनक्तुसादीदुत्तरतः पाहि प्रतिमा असि य-
जतं ते अन्यज्जागतमस्येकं च ॥ ५ ॥

[1]दश प्राचीर्दश भासि दक्षिणा । दश प्रतीचीर्द-
श भास्युदीचीः । दशोर्ध्वा भासि सुमनस्यमानः ।

---

[20]तैरेनं त्रिरूर्ध्वं उपवाजयति—मधुमध्विति ॥ मदनहेतुत्वात् प्राणो मधु स एव त्वमसि यजमानस्य । यद्वा—मन्तव्यं ब्रह्म मधु तदेव त्वमसीत्यन्ते स्तुतिः ॥

इति सप्तमे प्रश्ने पञ्चमोऽनुवाकः.

---

[1]यत्राभिजानाति 'याभिर्वर्तिकां ग्रसिताममुञ्चतम्'* इति तदध्वर्युर्महावीरमभिमन्त्रयते—दश प्राचीर्दश भासि दक्षिणा इत्यनुवाकेन । प्रथमा त्रिष्टुप् ॥ प्राचीः प्रागञ्चनाः दश रुचः भासि भासयसि प्रकाशयसि । अन्तर्भावितण्यर्थो द्रष्टव्यः । दक्षिणा दक्षिणाञ्चनाः । 'दक्षिणादाच्' । प्रतीचीः प्रत्यगञ्चनाः उदीचीः उदगञ्चनाः ऊर्ध्वा ऊर्ध्वाञ्चनाः दश दश भासि भासयसि प्रतिदिशं दशदश रुचः प्रवर्तयन् ज्वलयसि । 'स नो रुचं धेहि' इति वक्ष्यमाणत्वात् विशेष्यविशेषलाभः । दशशब्दो बहुत्ववचनः । यद्वा—एकैकस्यां दिशि दशदिगञ्चना दशप्रकारा रुचः तास्तथाविधाः सर्वासु दिक्षु भासयसि प्रागादि-

---

*ऋक्सं. १-११२-८.

स नो रुचं धेह्यहृणीयमानः । अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा । स मा रुचितो रोचय । इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा । स मा रुचितो रोचय । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । स मा रुचितो रोचय ॥ ११ ॥ द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा । स मा रुचितो रोचय । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु

पञ्चकोपादानं प्राधान्यात् । कोणाधारपञ्चकमपि गृह्यते दश इति वचनात् । एतदुक्तं भवति—दशस्वपि दिक्षु दशदिगञ्चना रुचो भासयसीति । तदेव स्पष्टयति—अहृणीयमानः कया चिदपि भानविधया अहीयमानः स त्वं नः अस्मभ्यं रुचं धेहि देहि अस्मासु वा सुमनस्यमानः सानुग्रहमना भव* । मां रोचय दीप्तं कुरु । एवं दक्षिणादिषु व्याख्येयम् । द्युतानो नाम विशिष्टो मारुतः ॥

[2]देवानामौदुम्बरं मिनोति—रोचितस्त्वमित्यादि ॥ देवेषु मध्ये हे देव! देवनशील! घर्म ! स्वयमेव सर्वदा दीप्त! इदानीं त्वं रोचितः असि दिशिदिशि देवादिभिरुद्दीपितदीप्तिरसि । तस्मात्तस्य तादृशस्य तव प्रसादादहमपि मनुष्येषु रोचिषीय रुचिमान्भूयासम् ॥

*अत्र ग्रन्थो गलित इव भाति.

पाङ्क्तेन छन्दसा । स मां रुचितो रोचय । रोचितस्त्वं देव घर्म देवेष्वसि । रोचिषीयाहं मनुष्येषु । [3]सम्राड्घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसि । रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासम् । रुगसि । रुचं मयि धेहि ॥ २० ॥ मयि रुक् । [4]दश पुरस्ताद्रोचसे । दश दक्षिणा । दश प्रत्यङ् । दशोदङ् । दशोर्ध्वो भासि सु-

[3]सम्राडित्यादि ॥ हे सम्राट्! सङ्गतदीप्ते! घर्म! स्वयमेव दीप्त! त्वं देवेषु मध्ये रुचितो दीप्तश्च असि आयुरादिमांश्च । तव प्रसादादहमपि मनुष्येषु मध्ये रुचित आयुरादिमांश्च भूयासम् । रुक् दीप्तिः सैव त्वं असि तन्मयत्वात् । स त्वं तादृशीं रुचं मयि धेहि स्थापय । यथा मय्येव सर्वा रुक् तिष्ठति । यद्वा—यथा मयि रुगेव सर्वदा रुङ्मयो भूयासम् ॥

[4]दशेत्यादि ॥ सङ्गतदीप्तित्वं सम्राट्त्वं चास्य प्रतिपादयति—पुरस्तात् पूर्वाञ्चनः त्वं दश दिशो रोचसे रोचयसि स त्वमपि भासिति वक्ष्यते । दक्षिणा दक्षिणाञ्चनः प्रत्यङ् प्रत्यगञ्चनः उदङ् उदगञ्चनः ऊर्ध्वः ऊर्ध्वाञ्चनः । एवं सर्वत्र सर्वप्रकारा दिशो रोचयसि । सुमनस्यमानः त्वमपि भासि । हे सम्राट्! सङ्गतदीप्ते! नः अस्मभ्यं इषं अन्नं ऊर्जं रसं च धेहि देहि । किञ्च—वाजी अन्नवांस्त्वं स्वयमेव इदानीमस्माकं वाजिने अन्नवते

मनस्यमानः । स नस्सम्राडिषमूर्जं धेहि । वाजी वाजिने पवस्व । रोचितो घर्मो रुचीय ॥ २१ ॥

रोचय धेहि नव च ॥ ६ ॥

[1]अपश्यं गोपामनिपद्यमानम् । आ च परा च पथिभिश्चरन्तम् । स सध्रीचीस्स विषूचीर्वसानः ।

---

हविषे पवस्व पावनमात्मानं ख्यापय । इत्थं अयं घर्मः रोचितः उत्तेजितदीप्तिस्संजातः । तेन अहमपि रुचीय रोचितुमर्हामि । अर्हार्थे लिङ्, 'बहुलं छन्दसि' इति शपो लुक् । समानवाक्ये पदात्परत्वाभावात् निघाताभावः ॥

इति सप्तमे षष्ठोऽनुवाकः.

---

[1]यथा लोकमवस्थाय सर्व ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्ते—अपश्यं गोपामिति । प्रथमा त्रिष्टुप् ॥ अग्निरूपेण आदित्यरूपेण वा महावीरस्स्तूयते—अपश्यं पश्यामि पश्येयं वा त्वां गोपां सर्वस्य गोप्तारम् । आयप्रत्ययान्तात् क्विप् । गवां वा पातारम् । पातेर्विच् । अनिपद्यमानं अन्यग्भवन्तं पथिभिः मार्गैः यज्ञियैः आचरन्तं इहागच्छन्तं इतश्च परागच्छन्तं यज्ञार्थं सोऽस्माभिः दृश्यमानः सध्रीचीः सहाञ्चतीः विषूचीः विष्वक् नानाऽञ्चतीश्च दीप्तीः वसानः आच्छादयन् । सहपूर्वादञ्चतेः क्विनि 'सहस्य सध्रिः' इति सध्र्यादेशः । अन्तोदात्तश्चेष्यते । नकारा-

**आवंरीवर्ति भुवंनेष्वन्तः । [2]अत्रं प्रावीः । [3]मधु माध्वींभ्यां मधु माधूंचीभ्याम् । अनुं वां देववींतये ।**

कारयोः लुप्तयोः 'चौ' इति दीर्घत्वम् । विषुशब्दस्य ऊर्यादित्वेन गतित्वात् 'अनिगन्तोऽञ्चतौ' इति प्रकृतिस्वरत्वम् । **आवरीवर्ति** इत्थं पुनःपुनरावर्तता **भुवनेष्वन्तः** लोकमध्ये तद्रक्षणार्थम् । यङ्लुगन्तात् पञ्चमो लकारः ॥

[2]अत्र प्रावीरित्यादि यजुरादिका एकपदा गायत्री ॥ अनु वामित्यश्विनावुच्येते । हे अश्विनौ! **अत्र** महावीरे **प्रावीः** प्राविष्टं प्राप्तुतं **मधु** मधुरं हविः । प्राप्तिकर्मणो वेतेर्लुङि वचनव्यत्ययः । प्रत्येकं वोच्येते । केचिदाहुः—पूर्वस्याः त्रिष्टुभश्शेषमिदं यजुः—य एवमावरीवर्ति स त्वं हे सूर्य! अत्र महावीरे स्थितः **प्रावीः** प्रकर्षेण भुवनान्यवसि रक्षसि रक्ष वा ॥

[3]अथ मधु माध्वीभ्यामित्यादिकया अनुवा मिति गायत्र्या अश्विनावुच्येते । मधु अस्या अस्तीति माध्वी अश्विनोर्मधुकुम्भी उच्यते। 'मधोर्ञ्च' इति मत्वर्थे ञ्चप्रत्ययः 'ऋत्व्यवास्त्व्य' इति निपात्यते । कुम्भी विशेष्यते—माधूची मध्वञ्चतीति मध्वः वसन्तः तत्सम्बन्धिनी माधूची तत्राप्यायमानत्वात् । ब्राह्मणं च—'वासन्तिकावेवास्मा ऋतू कल्पयति'* इति । उत्सादित्वादञ् । पूर्ववत् 'चौ' इति दीर्घत्वम् । तादृश्यौ द्वे कुम्भ्यौ द्वयोः हे अश्विनौ! ताभ्यामित्थंभूतयोः **वां** युवयोः तादृशमधुकुम्भीसम्बन्धिनोः **देववी-**

*आ. ८-९.

[4]सम॒ग्निर॒ग्निनाऽगत । सं दे॒वेन॑ सवि॒त्रा । सꣳ सूर्ये॑ण रोचते ॥ २२ ॥ [5]स्वाहा॒ सम॒ग्निस्तप॑साऽगत । सं

तये यागाय मध्वेवानुरूपं हविः घृतमिति यावत् । यथा "अश्विना घर्मं पातं हार्दिवानं"* इति । अनुशब्देनानुरूप्यं द्योत्यते । उभयविशेषणानुरूप्यं मधुनो द्योतयितुं मधुशब्दावृत्तिः । देववीतिशब्दो दार्सभारादिर्द्रष्टव्यः । तस्मान्मधुरमिदं हविः अत्र प्राप्नुतमिति । पक्षान्तरे मधुरं हविः निर्वर्तयाम इति शेषः ॥

[4]समग्निरग्निनेति गायत्री ॥ अयमग्निः घर्मः **अग्निना** महता लोकशोषकेण तापेन **समगत** संगच्छताम् । ब्राह्मणं च—'ग्रैष्मावेवास्मै'† इति । यद्वा—परेणाग्निना आत्मज्योतिषा संगच्छतां **देवेन** च **सवित्रा** भास्करेण सर्वस्य प्रेरकेण वा परेण देवेन सङ्गच्छताम् । ततश्चायमग्निः **सूर्येण संरोचते** सह रोचतां, समानमिति यावत् । परस्य देवस्य तेजस्त्वात् सूर्यस्य ; यथा—"तत्सवितुर्वरेण्यं भर्गः"‡ इति ॥

[5]स्वाहेत्यादि ॥ अथ स्वाहुतश्चायमग्निः आनीतगोपयः **तपसा** भृशं तापकेन तेजसा परेण **समगत** संगस्यते । यद्वा—**स्वाहा** सुष्ठु वागाह । समग्निरित्यादि । पूर्वमन्त्रोक्तः तदिति§ **देवेन सवित्रा** संगंस्यते ततस्सूर्येण **समरोचिष्ट** समानं रोचिष्यते । यथा—"स्वाहा त्वा सूर्यस्य रश्मये"¶ इति । 'आशंसायां भूतवच्च' इति भविष्यति लुङ् ॥

* आ. ७-९. † आ. ८-६. ‡ सं. १-५-६. § तमिति. ¶ आ. ७-८.

देवेन सवित्रा । स॒ सूर्येणारोचिष्ट । [6]धर्ता दिवो विभासि रजसः । पृथिव्या धर्ता । उरोरन्तरिक्षस्य धर्ता । धर्ता देवो देवानाम् । अमर्त्यस्तपोजाः । [7]हृदे त्वा मनसे त्वा । दिवे त्वा सूर्याय त्वा ॥२३ ऊर्ध्वमिममध्वरं कृधि । दिवि देवेषु होत्रां यच्छ । [8]विश्वासां भुवां पते । विश्वस्य भुवनस्पते । विश्वस्य मनसस्पते । विश्वस्य वचसस्पते । विश्वस्य

---

[6]धर्तेत्यादि ॥ धर्ता धारयिता भूत्वा दिवो रजसः द्युलोकस्य उदकस्य वा विभासि विविधं दीप्यस्व । एवं पृथिव्याः अन्तरिक्षस्य वा विस्तीर्णस्य देवानां च हविर्निर्वहणादिना धर्ता देवः देवनशीलः अमर्त्यः अमरणधर्मा तपोजाः तपःप्रभवः तापार्थं वा जातः । पूर्ववद्विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वं च । एवं सर्वस्य वृष्ट्युत्पादनद्वारेण धर्ता भवन् भासीति । ब्राह्मणं च—'वार्षिकावेवास्मा ऋतू कल्पयति'* इति ॥

[7]'हृदे त्वा' इति व्याख्यातम्† सोमे सस्यसंपत्त्या यज्ञं निर्वर्तयत इति । ब्राह्मणं च—'शारदावेवास्मा ऋतू कल्पयति'* इति ॥

[8]विश्वासामित्यादि ॥ भवन्तीति भुवः प्रजाः तासां पते! पातः!। इदं यजुः । अथैतदादिका पङ्क्तिः पञ्चपदा अनवसाना—विश्वस्य भुव-

---

*आ. ८-६. †सं. १-३-१३.

तपसस्पते । विश्वस्य ब्रह्मणस्पते । देवश्रूस्त्वं देव घर्म देवान्पाहि । तपोजां वाचमस्मे नियच्छ देवायुवम् ॥२४॥ [9]गर्भो देवानाम् । पिता मतीनाम् । पतिः प्रजानाम् । मतिः कवीनाम् । [10]सं देवो देवेन

नस्पत इत्यादि । भुवनशब्दात् षष्ठ्येकवचनस्य व्यत्ययेन स्यादेशाभावे अतो गुणे पररूपत्वम् । सर्वत्र 'षष्ठ्याः पतिपुत्र' इति सत्वम् । ब्रह्म परिबृढं कर्म अत्र सविशेषणस्य षष्ठ्यन्तस्य 'सुबामन्त्रिते' इति पराङ्गवद्भावादामन्त्रितानामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । द्वितीयादीनां पूर्वपूर्वाविद्यमानतया निघाताभावः । हे **देव! घर्म! देवश्रूः** देवेषु श्रूयमाणः ख्यातिं गतस्त्वं **देवान् पाहि** । **तपोजां** तपसो जनयित्रीं तपःप्रभावजातां वा **देवायुवं** देवानात्मन इच्छन्तीं देवप्रियां **वाचं अस्मे** अस्मासु **नियच्छ** नियमेन स्थापय । देवशब्दात् क्यचि 'क्याच्छन्दसि' इत्युप्रत्ययः । तन्वादित्वादुवङ् । यद्वा—देवैर्मिश्रयित्री यजमानस्य देवायूः । यौतेः क्विपि 'ऊङ्गमादीनाम्' इत्यूकारः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् ॥

[9]**गर्भो देवानामिति** चतुष्पदा अक्षरपङ्क्तिः मध्येऽनवसाना ॥ **देवानां** इन्द्रादीनां **गर्भः** त्वमसि प्रशस्तः पुत्र इव धारयिताऽसि। यद्वा—**देवानां** व्यवहर्तृणां ऋत्विजां **गर्भः** उत्पाद्यः तनयोऽसि । **मतीनां** 'प्रजा वै मतयः'* इति ब्राह्मणम् । यद्वा—**प्रजानां**

*आ. ८-६.

सवित्राऽयंतिष्ट । सꣳ सूर्येणारुक्त । [11]आयुर्दास्त्वम-
स्मभ्यं घर्म वर्चोदा असि । पिता नोऽसि पिता नो
बोध । आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवो-
दा द्रविणोदाः ॥ २५ ॥ अन्तरिक्षप्र उरोर्वरीयान् ।

---

पिता पाताऽसि प्रकाशप्रदानात् । **पतिः** स्वामी **प्रजानां** असि **कवीनां** क्रान्तदर्शिनां **मतिः** सूक्ष्मबुद्धिरसि तत्प्रदानत्वात् ॥

[10]**संदेव इत्यादि** ॥ इदानीमयं घर्मो देवः **सवित्रा** देवेन **समयतिष्ट** संयतते संयत्तो भवति । तेजसाऽतिशयानो विगृह्णातीव **सूर्येण** देवेन **समरुक्त** संरुजति तेन समं प्रहर्तुमिवारभते केशाकेशीव करोति । रुजो भङ्गे, लुङि व्यत्ययेनात्मनेपदम् । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वम् । यद्वा—रोचतेर्लङि 'बहुलं छन्दसि' इति शपो लुक् । सूर्येण समं रोचते समं वा दीप्यते (तेन संगतोपि दीप्यते) ॥

[11]**आयुर्दा इत्यादि** ॥ हे **घर्म** ! आयुषो वर्चसश्च **अस्मभ्यं** दाता त्वमसि । अस्माकं पितृस्थानीयः त्वमसि । तस्मात् **पिता** पाता सन् **नः** अस्मान् **बोध** बोधय । हितेषु आयुश्शरीरमुदकं च अस्मासु धेहि स्थापय दीप्तेः प्रजाया धनस्य चास्मभ्यं दाताऽसि । हे **अन्तरिक्षप्र** ! अन्तरिक्षस्य निजेन तेजसा पूरयितः ! । प्रा पूरणे, 'आतोऽनुपसर्गे कः' **उरोः** विस्तीर्णादप्याकाशादेः **वरीयान्** उरुतरोऽसि । तादृशं **त्वां** **अशीमहि** आप्नुयाम त्वदीयास्स्याम । छान्दसः शपो लुक् । त्वमपि अस्मान् विशेषेण **मा हिंसीः** ॥

अशीमहिं त्वा मा मा हिꣳसीः । [12]त्वमंग्ने गृहपं-
तिर्विशामंसि । विश्वांसां मानुंषीणाम् । शतं पू-
र्भिर्यंविष्ठ पाह्यꣳहंसः । समेद्धारꣳ शतꣳ हिमाः ।

---

[12]त्वमग्न इति शक्करी पङ्क्तिदा द्वयोर्द्वयोः पादयोः अवस्यति ॥ हे अग्ने! विश्वासां मानुषीणां विशां प्रजानां साधारणो गृहपतिस्त्वमसि गृहपतित्वहेतुः ग्रहाणां वा पाता । कथमेको विश्वासां उपकरोतीत्याह—पूर्भिः पुरैः शरीरैः शतं शतसङ्ख्योसि अनेकोसि नैकः विविधानन्तविग्रहपरिग्रहेण अनुगृहीताऽसि सर्वासां विशामित्यर्थः । हे यविष्ठ! सर्वदा युवतम ! हविषां वा मिश्रयितः! । युवशब्दात् 'तुच्छन्दसि' इति इष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः । स त्वं मां अंहसः पाहि रक्ष समेद्धारं तव सन्दीपयितारं मां शतं हिमाः बहून् संवत्सरान् नित्यं त्वत्समिन्धनपरामिति यावत् । तं तादृशं त्वां द्राविणं त्वामेव भजमानम् । ग्रहादित्वाण्णिनिः । यद्वा—तमेव त्वां द्रवतीति तंद्रवी । द्वितीयाया अलुक्, निपातश्चोपपद्यते । हार्दिवानं हृदि वननीयोऽभिप्रेतार्थो हृदिवानः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तत्सम्बन्धी हार्दिवानः । यद्वा—हृदि भवं हार्दं अभिप्रेतोऽर्थः तद्वन्मनो हार्दि, तेन वननीयः घञि ताथादिना उत्तरपदान्तोदात्तत्वम् । वातेर्वा कर्मणि ल्युटि 'अनो भावकर्मवचने' इत्युत्तरपदान्तोदात्तत्वम् । तदेव हार्दि दर्शयति—इहेति । इहैव मय्येव रातयः दातव्यानि धनानि सन्तु सर्वा विशो मह्यमेव धनानि ददत्विति ॥

तं द्राविणꣳ हार्दिवानम्। इहैव रातयस्सन्तु । [13]त्व-
ष्टीमती ते सपेय । सुरेता रेतो दधाना। वीरं विदे-
य तव संदृशि । माऽहꣳ रायस्पोषेण वियोषम् ॥
२६ ॥

रोचते सूर्याय त्वा देवायुवं द्रविणोदा
दधाना द्वे च ॥ ७ ॥

[1]देवस्यं त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्।
पूष्णो हस्ताभ्यामाददे । [2]अदित्यै रास्नाऽसि । [3]इ-

---

[13]परिश्रिते प्रतिप्रस्थाता पत्नीं वाचयति—त्वष्टीमतीति ॥ अयं च बृहतीविशेषो व्याख्यातः "वस्व्यसि"* इत्यत्र ॥

इति सप्तमे सप्तमोऽनुवाकः.

---

[1]रशनामादत्ते—देवस्य त्वेति ॥ सावित्रो व्याख्यातः 'कर्मणे वाम्'† इत्यत्र । आदद इति विशेषः ॥

[2]तामभिमन्त्रयते—अदित्यै रास्नाऽसीति ॥ व्याख्यातं 'यज्ञस्य घोषदसि'‡ इत्यत्र ॥

[3]पूर्वया द्वारोपनिष्क्रम्य त्रिरुपांशु घर्मदुघमाह्वयति—इड एहीत्यादिभिः ॥ इडादीनि गोर्देवनामानि । ब्राह्मणं च—'एतानि वा अस्यै

---

*सं. १-२-५.　　†सं. १-१-४.　　‡सं. १-१-२.

**इ एहि । अदित एहि । सरस्वत्येहि । [4]असावेहि असावेहि । असावेहि ॥ २७ ॥ [5]अदित्या उष्णी षमसि । [6]वायुरस्यैडः । [7]पूषा त्वोपावसृजतु । अ श्विभ्यां प्रदापय । [8]यस्ते स्तनश्शशयो यो मयोभूः**

देवनामानि '* इति । हे इडे ! अन्नहेतोरेहि आगच्छ । अदिते ! अखण्डिते ! हे सरस्वति ! सरणशीलं पयः सर तद्वति ! ॥

[4]दक्षिणया द्वारोपनिष्क्रम्य मनुष्यनामभिस्त्रिरुच्चैः आह्वयति—असावेहीति ॥ असावित्यत्र तदीयं नाम निर्दिशति । यथानाम भवति सा लोके कमला पार्वती विशालाक्षीति । हे कमले ! एहीति अदश्शब्दोऽन्तोदात्तः । तस्येहामन्त्रिताद्युदात्तत्वम् । अत्र ब्राह्मणं— 'एतानि वा अस्यै मनुष्यनामानि '* इति ॥

[5]रशनया घर्मदुघमभिदधाति—अदित्या इति ॥ हे घर्मधुक् अदित्याः पृथिव्याः देवमातुर्वा उष्णीषं शिरोवेष्टनमसि, उत्तमाङ्गालङ्करणमसीति यावत् । उष्णमज्ञातस्यैषणं† उष्णीषम् ॥

[6]वत्समभिदधाति—वायुरस्यैड इति ॥ वाय्वधिष्ठातृकत्वात् वायुरिति वत्स उच्यते, यथा—'वायवस्थ'‡ इति । ऐडः इडासम्बन्धी स त्वमसि । सम्बन्धसामान्यस्य विवक्षितत्वादपत्यत्वमपि ॥

[[7]उपावसृजति वत्सं—पूषेति ॥ पूषा त्वा त्वां उपावसृजतु स्तनपानार्थं मुञ्चतु । त्वं च] अश्विभ्यां अश्व्यर्थं प्रदापय प्रस्नावयपयः

*आ. ८-७. †उष्णमाज्ञा तस्यैषणात्. ‡सं. १-१-१.

येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि । यो र॑त्न॒धा व॑सु॒वि-द्यस्सु॒दत्रः॑ । सर॑स्वति॒ तमि॒ह धात॑वेऽकः । [9]उस्र॑ घ॒र्मꣳ शि॑ꣳष । उस्र॑ घ॒र्मं पा॑हि ॥२८॥ घ॒र्माय॑

---

[8]घर्मदुघमभिमन्त्रयते—यस्त इति इयं त्रिष्टुबनवसाना ॥ हे सरस्वति! गौः! यस्ते त्वदीयः स्तनः शशयः शयानः अप्रस्तुतत्वात् । पचाद्यच् । छान्दसं द्विर्वचनम् । यः स्तनः मयोभूः क्षीरदानेन सुखस्य भावयिता लोकस्य । येन स्तनेन विश्वा वार्याणि वरणीयानि दधिक्षीरघृतादीनि पुष्यसि पुष्णासि । यश्च ते स्तनः रत्नधा रमणीयानां धनानां घृतादीनां धारयिता अत एव वसुवित् बहुनो वसुनो धनस्य वेत्ता लब्धा बहुमूल्य इति यावत् । यश्च सुदत्रः शोभनदानः न तु धनवत्त्वमात्रमेव । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । तं तादृशं महानुभावं स्तनं इह अस्मिन्वत्से निमित्ते धातवे पातुं योग्यं प्रस्नुतक्षीरं अकः कुरु । यद्वा—इह कर्मणि देवेभ्यो दातुं शक्तं हविर्दानसमर्थं तं स्तनं कुरु । करोतेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक् । धयतेर्दधातेर्वा 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः ॥

[9]वत्सं निदधाति—उस्र घर्ममिति ॥ हे उस्र! वत्स! घर्मं एतत् क्षीरादिकं जीवनं शिंष स्थितिमन्तं कुरु । सर्वपाप्तेन मानीनशः । हे उस्र! घर्मं पाहि रक्ष । त्वमेव हि तस्य पाता

शिश्च । [10]बृहस्पतिस्त्वोपं सीदतु । [11]दानवस्स्थ पेरं-
वः । विष्वग्वृतो लोहिंतेन । [12]अश्विभ्यां पिन्वस्व।
सरंस्वत्यै पिन्वस्व । पूष्णे पिन्वस्व । बृहस्पतंये
पिन्वस्व । इन्द्रांय पिन्वस्व । इन्द्रांय पिन्वस्व ॥
२१ ॥ [13]गायत्रोंसि । त्रैष्टुंभोसि । जागंतमसि । [14]स-

---

तदर्थं घर्माय शिंष अवशेषय पयः मा सर्वं पाः । शिनष्टेर्लोटि द्वितीयो विकरणः* श्लुः ॥

[10]उपसीदति—बृहस्पतिस्त्वेति ॥ 'ब्रह्म वै देवानां बृहस्पतिः'† ब्रह्मैव स्वयं त्वां दोग्धुं उपसीदतु ॥

[11]स्तनान् संमृशति—दानवस्स्थेति ॥ दानवः दातारः पयसः स्थ पेरवः पातव्याः पयोर्थिना वत्सेन । यद्वा—दानवः शुद्धाः पेरवः पातव्या वत्सेन। लोहितेन पयसा अमेध्येन बिष्वग्वृतः सर्वतोऽभ्रियमाणाः । कर्मणि क्विप् । अक्षरत आवृत्तिः ॥

[12]रक्ष्य[क्षर]माणाः वर्षीयसि दोग्ध्रे दोग्धि—अश्विभ्यामित्यादि ॥ अश्व्याद्यर्थं पयः पिन्वस्व क्षारय । पिवि सेचने । द्विरिन्द्रायेत्युच्यते भूयिष्ठभाक्त्वादिन्द्रस्य । ब्राह्मणं च—"द्विरिन्द्रायेत्याह । तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः"† इति ॥

[13]शफावादत्ते—गायत्रोसि त्रैष्टुभोसीति ॥ छन्दस्त्वेन शफयोः स्तुतिः । उपयमनं प्रतिप्रस्थाताऽऽदत्ते—जागतमसीति । गतम्‡ ॥

---

* विकरणस्य. †आ. ८-७. ‡आ. ७-५.

होर्जो भागेनोप मेहि । [15]इन्द्राश्विना मधुनस्सारघ-
स्यं । घर्मं पात वसवो यजता वट् । [16]स्वाहा त्वा
सूर्यस्य रश्मये वृष्टिवनये जुहोमि । [17]मधु हविरसि ।

[14]पय आह्रीयमाणं समीक्षते—सहोर्ज इति ॥ ऊर्जो रसस्य भागेन अंशेन सह मामुपेहि आगच्छ । आङ इकारेण सह आद्गुणे पूर्वं प्रत्यन्तवद्भावेन तस्याङ्ग्रहणेन ग्रहणात् 'ओमाङोश्च' इति पररूपत्वम् । एकादेशस्वरेण तस्योदात्तत्वं आङ उदात्तत्वात् ॥

[15]महावीरे गोपय आनयति—इन्द्रेति ॥ हे इन्द्र ! हे अश्विना ! ते यूयं घर्मं तप्तं पयः पात पिबत । 'बहुलं छन्दसि' इति शपो लुक् । कीदृशं सारघस्य मधुनः एकदेशं तत्तुल्यमिति यावत् । सरघा मधुमक्षिका । ताभिरुत्पादितस्य । हे वसवः ! यूयं एतत् यजत इन्द्रादिभ्यो दत्त सङ्गमयत वा तैः । वषट्करोति—वडिति । संप्रदानार्थस्य वषट्कारस्य विकृतनिर्देशः परोक्षत्वाय । ब्राह्मणं च भवति—'वडित्याह । परोक्षमेव वषट्करोति'* इति ॥

[16]उद्यन्तमूष्माणमनुमन्त्रयते—स्वाहेति ॥ स्वाहुतं त्वां करोमीति स्वाहा सूर्यस्य रश्मये वृष्टिवनये वृष्टेस्सम्भक्त्रे उत्पादयित्रे जुहोमि । इति प्रक्षेपार्थः । 'छन्दसि वनसन' इति वनतेरिन्प्रत्ययः ॥

[17]अजापय आनयति—मध्विति ॥ मधुरं हविस्त्वमेवासि ॥

*आ. ८-७.

[18]सूर्यस्य तपस्तप । [19]द्यावापृथिवीभ्यां त्वा परि गृ-
ह्णामि ॥ ३० ॥ [20]अन्तरिक्षेण त्वोपयच्छामि । [21]देवानां
त्वा पितृणामनुमतो भर्तुꣳ शकेयम् । [22]तेजोसि ।
तेजोऽनु प्रेहि । दिविस्पृङ्मा मां हिꣳसीः । अन्त-

---

[18]तस्योष्माणमनुमन्त्रयते—सूर्यस्येति ॥ सूर्यस्यापि यत्तपः तापः तदपि ऊर्ध्वं गत्वा तप तापय त्वदीयेन तापेनाभिभव ॥

[19]महावीरं शफाभ्यां परिगृह्णाति—द्यावापृथिवीभ्यां त्वेति ॥ द्यावापृथिवीत्वेन शफयोः स्तुतिः ॥

[20]उपयमनेन प्रतिप्रस्थाता उपयच्छति—अन्तरिक्षेणेति ॥ पूर्ववत् स्तुतिः । उपयमनमधस्तातूग्रहणम् ॥

[21]आदायोत्तिष्ठति—देवानां त्वा पितृणामिति ॥ विभक्तिव्यत्ययः । देवैः पितृभिश्च अनुमतोऽहम् । यद्वा—देवानां पितृणां च सम्बन्धी तैरनुमतत्वात् । अहं त्वां भर्तुं शकेयं शक्तो भूयासम् । लिङ्ग्याशिष्यङ् ॥

[22]प्राङ्हरति—तेजोसीति ॥ तेजस्वी त्वमसि हे महावीर ! तस्मात् आहवनीयाख्यं तेजः अनुप्रेहि अनुलक्ष्य प्रागच्छ। गमनकाले च दिवि स्पृक् दिवं स्पृशन् । ‘तत्पुरुषे कृति बहुलम्’ इत्यलुक् । त्वदीयेन तापेन दिवं दहन् तत्कारिणं मां मा हिंसीः दिव्यजनकोपसञ्जातबाधं मा कार्षीः । एवं अन्तरिक्षस्पृक् पृथिविस्पृक्

रिक्षस्पृङ्मा मा हिꣳसीः । पृथिविस्पृङ्मा मा हिꣳसीः । सुवरसि सुवर्मे यच्छ । दिवं यच्छ दिवो मा पाहि ॥ ३१ ॥

एहि पाहि पिन्वस्व गृह्णामि नवं च ॥ ८ ॥

[1]समुद्राय त्वा वाताय स्वाहा । सलिलाय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा

---

च मां मा हिंसीः । 'ङ्यापोस्संज्ञाच्छन्दसोः' इति ह्रस्वत्वम् । सुवः सुष्ठु प्राप्यं परमं सुखं असि त्वदधीनत्वात्तस्य । तस्मात् मह्यं सुवः यच्छ देहि । दिवं द्युलोकं तादृशं सुखानुभवस्थानं मह्यं देहि । तत्रस्थं मां तस्या दिवः पाहि तदुपघातशङ्कासम्भवात् व्यसनात् रक्ष । यथा दिवि वसतो मे न कश्चिदुपघातो भविष्यति तथा कुरु ॥

इति सप्तमे अष्टमोऽनुवाकः.

---

[1]व्रजन्ननवानं पञ्च वातनामानि व्याचष्टे—समुद्राय त्वेत्यादीनि ॥ अपान्य पञ्चोत्तराणि अग्नये त्वा इत्यादि । अवशिष्टानि यथोपपातं* । समुद्रः समुद्द्रवणशीलः समुद्द्रवन्ति अस्मादाप इति वा वृष्टिहेतुः । तादृशाय वाताय स्वाहा स्वाहुतिकल्पमेतत् वचः-

---

*यथोपपादं.

वाताय स्वाहा। दुवस्वते त्वा वाताय स्वाहा। शि- मिद्वते त्वा वाताय स्वाहा। अग्नये त्वा वसुमते स्वा- हा। सोमाय त्वा रुद्रवते स्वाहा। वरुणाय त्वाऽऽदि- त्यवते स्वाहा ॥३२॥ बृहस्पतये त्वा विश्वदेव्यावते स्वाहा। सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा। यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा।

---

प्रीतिहेतुत्वात्। यद्वा—तादृशो वातो वायादिति त्वां त्वदीयं नाम ब्रवीति। इत्थमिदं कर्तव्यमिति स्वा वागाह प्रजापतेः। एवमुत्त- रत्रापि द्रष्टव्यम्। सलिलः गत्वरः। सल गतौ। महासलिलहेतु- र्वा। अनाधृष्यः ईषदपि धर्षयितुमशक्यः महावातः। 'ऋदुपधा- द्वा' इति क्यप्, 'ययतो श्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम्। अप्रातिधृष्यः स्वयं धर्षयन्नपि अन्येन प्रधर्षयितुमशक्यः वात्या- वातः। अवस्युः रक्षां तृप्तिं वा सर्वस्येच्छन् साध्यसिद्धिहेतुः। 'छन्दसि परेच्छायामपि' इति क्यप्, 'क्याच्छन्दसि' इत्युप्रत्ययः। दुव- स्वान् परिचरणवान् पूज्यः दक्षिणावातः। शिमिद्वान् कर्मवान् मन्दकरे हि वाते वाति कर्माणि न शक्यन्ते कर्तुम्। शिमिति कर्म- नाम। अकारोपजनः छान्दसः। वसुमान् अग्निरादित्यः प्रातस्सवने आदित्यरश्मयो वसवः वसुगणत्वेन वर्तन्ते। रुद्रवान् सोमश्चन्द्र- मा रुद्रवद्गणत्वात् माध्यन्दिने सोमस्य रसात्मनः स्वयं चन्द्रमाः शीतरश्मिः ओषधिवृद्धिहेतुत्वात्। आदित्यवान् वरुणः आपः तृतीयसवने आदित्यवद्गणत्वात् आदित्येन निजरश्मिषु गर्भत्वेन

[2]विश्वा आशा दक्षिणसत् । [3]विश्वान्देवानयाडिह । [4]स्वाहाकृतस्य घर्मस्य । मधोः पिबतमश्विना ।

वर्धितत्वात् । विश्वदेव्यावान् बृहस्पतित्वेन देवेषु वर्तते । देवेषु साधवो देव्याः विश्वेऽपि देवा यस्मिन् गणे स विश्वदेव्यः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दः अन्तोदात्तः । ततो मतुपि 'मन्त्रे सोमाश्व' इत्यादिना दीर्घत्वम् । ऋभुमदादिनामा सविता संवत्सरः । तादृशसंवत्सरकारित्वात् सवितुः । ऋभुमान् देववान् देवप्रियः यज्ञोत्सवादियोग्यः । त्रिविधं ऋद्धिहेतुः विभुमान् । भवसमृद्धिहेतुः प्रभुमान् । अन्नसमृद्धिहेतुः वाजवान् । अङ्गिरस्वान् पितृमान् यमः प्राणः यमोङ्गिरोभिः तपस्विभिः तद्वान् तेषां प्रभावस्याग्निसम्पाद्यत्वात् । स स्वयं प्राण एव बलवन्मथनप्रभावत्वात् ॥

[2]अपरेणाहवनीयं दक्षिणातिक्रामन् ब्राह्मणमीक्षते—**विश्वा आशा इति** । अनुष्टुबेषा ॥ **विश्वा आशा** आशिषः अभिप्रेतानि अयं **दक्षिणसत्** ब्रह्मा विहारस्य दक्षिणतस्सीदतीति दक्षिणसत् । एतदधीना इति भावः । अस्य हि दृष्ट्याऽविकलया यागनिर्वृत्तौ सर्वाभिमतकर्मफलसिद्धिरस्माकं भवतीति ख्यापयति ॥

[3]होतारमीक्षते—**विश्वानिति** ॥ इह अस्मिन् कर्मणि **विश्वान्** देवान् यष्टव्यान् अयं **अयाट्** यक्ष्यति । 'आशंसायां भूतवच्च' इति भविष्यति लङ् । हलन्तलक्षणा वृद्धिः । 'बहुलं छन्दसि' इतीडभावे हल्ङ्यादिसंयोगान्तलोपयोः व्रश्चादिना षत्वम् ॥

**स्वाहाऽग्नये॑ य॒ज्ञिया॑य । शं यजु॑र्भिः । [5]अश्विना॑ घ॒र्मं पा॑त॒ꣳ हार्दि॑वा॒नम् ॥ ३३ ॥ अह॑र्दि॒वाभि॑रू॒तिभिः॑ । अनु॑ वा॒ं द्यावा॑पृथि॒वी म॑ꣳसाताम् । स्वा-**

---

[4]घर्ममभिमन्त्रयते—**स्वाहाकृतस्येति** ॥ स्वाहाकारेण संस्कृतस्य प्रत्तस्य **मधोः** मधुरस्य **घर्मस्य** पयसः **पिबतं** हे अश्विनौ इदं चास्तु—**अग्नये यज्ञियाय** यज्ञसंपादिने स्वाहाकृतमिदं हविः **शं** शान्तिहेतुरस्तु शमयितृ वाऽस्तु **यजुर्भिश्च** ॥

[5]संस्कृते वषट्कृते जुहोति—**अश्विना घर्ममिति** ॥ हे अश्विनौ **घर्मं पातं** पिबतं **हार्दिवानं** व्याख्यातम्* । कथं नाम पिबावेति हृदि चिरकालाशंसितमिति यावत् । कीदृशं **अहर्दिवाभिरूतिभिः** इत्थंभूतं पिबतम् । क्रियाविशेषणम् । यथा अहर्दिवाभिरूतिभिः इत्थंभूतं भवति तथा पिबतम् । अहश्च दिवा च अहर्दिवम् । अचतुरादौ निपात्यते । तत्र भवाभिः । भवप्रत्ययस्य छान्दसो लुक् । तादृशीभिः ऊतिभिः तृप्तिभिः सर्वाहोरात्रानुवृत्ताभिरित्यर्थः । अथ तथा पिबन्तौ **वां** युवां **द्यावापृथिवी** द्यावापृथिव्यौ **अनुमंसातां** सहमाने अभूताम् । छान्दसो लुक् । छान्दसत्वमेव दर्शयितुमिडभावः । **इन्द्रायेत्ये**दं हविः स्वाहुतमस्तु ॥

[6]अनुवषट्कृते जुहोति—**स्वाहेन्द्रा वडिति** ॥ इन्द्रा इन्द्राय ।

---

* आ, ७-७[12]

हेन्द्राय । [6]स्वाहेन्द्रा वट् । [7]घर्ममपातमश्विना हार्दिवानम् । अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी अंमःसाताम् । तं प्राव्यं यथा वट् । नमो दिवे । नमः पृथिव्यै ॥ ३४ ॥ दिवि धा इमं यज्ञम् । यज्ञमिमं दिवि धाः । दिवं गच्छ । अन्तरि-

'सुपां सुलुक्' इत्याकारः । स्वाहुतमिदं हविरस्तु इन्द्राय । वडिति वषट्कारविकारः प्रदानार्थः ॥

[7]अनुवाकशेषेणोपतिष्ठते—**घर्ममपातमिति** ॥ समानं पूर्वेण । भूतकालत्वं विशेषः । **तं प्राव्यमिति** प्रकर्षेणावन्ति तृप्यन्त्यनेनेति प्राव्यः अहर्दिवाऽनुवृत्तितृप्तिहेतुः । करणे ण्यत् । तत् घर्मं वषट्कृतं **प्राव्यं यथा अन्वमंसातां** तथा तदनुमत्यै (?) स हि प्राव्यत्वमभिभवति । तस्मादुभयमपि अन्वमंसातां इत्युक्तं भवति । यद्वा—**यथा वट्** वषट्कारः कृतः तस्यतस्य तं प्राव्यमन्वमंसातां यथास्वं तृप्तिहेतुमनुमतवत्यौ । यथेत्यसमस्त एव । यस्मादनुमंसातां तस्माद्दिवे **पृथिव्यै** च अनुमतवत्यै **नमः इमं** युष्मदनुमत्या सम्यक् निर्वर्तितं **यज्ञं** हे पृथिवि! **दिवि** द्युलोके देवेषु **धाः** धेहि स्थापय । अथ **यज्ञमिमं** पृथिव्या दिवि स्थापितं हे द्यौः! त्वमपि **दिवि** नाके वाताख्ये परमे व्योम्नि **धाः** । यथा—"इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वहा वाते धाः"* इति । अग्निर्वोच्यते—

* सं. १-१-१३.

क्षं गच्छ । पृथिवीं गच्छ । पञ्च प्रदिशो गच्छ । दे-
वान्घर्मपान्गच्छ । पितॄन्घर्मपान्गच्छ ॥ ३५ ॥
आदित्यवते स्वाहा हार्दिवानं पृथिव्या अष्टौ च॥९

[1]इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि।
क्षत्त्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः
पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवी-

---

हे अग्ने! इममस्मदीयं यज्ञं प्रथमं दिवि आदित्ये धाः तत इममा-
दित्ये निहितं दिवि द्युलोके देवेषु धा इति । दधाते-
र्लेटि शपो लुक् । लुङि वा छान्दसः 'गातिस्था' इति सिचो
लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । हे यज्ञ!
त्वमपि द्युप्रभृतीन् **गच्छ** । यत्रयत्र भोक्तुमिच्छामि तत्रतत्र
मम भोगाय भव । **प्रदिशः** प्राच्यादयः पञ्च ऊर्ध्वया सह।
ये घर्ममेव पिन्वन्ति तेषामपि लोके मम भोगाय भव। यद्वा—
द्युप्रभृतीनां स्थित्यर्थं तत्रतत्र गच्छ ॥

इति सप्तमे नवमोऽनुवाकः.

---

[1]उपर्याहवनीये धार्यमाणं प्रतिप्रस्थाता शृतदध्नाऽभिपूरयति । त-
त्राभिपूरणे विक्षरन्तं महावीरमभिमन्त्रयते—इषे पीपिहीति ॥ इ-
डादिसमृद्धये लोकस्य **पीपिहि** त्वं समन्तात् क्षर । पिबि

**भ्याँ पीपिहि । सुभूतायं पीपिहि । ब्रह्मवर्चसायं पीपिहि ॥ ३६ ॥ यजमानाय पीपिहि । मह्यं ज्यैष्ठ्याय पीपिहि । [2]त्विष्यै त्वा । द्युम्नायं त्वा । इन्द्रियायं त्वा भूत्यैं त्वा । [3]धर्मासि सुधर्मामे-**

---

सेचने, छान्दसश्शपः श्लुः । 'तुजादीनां' इत्यभ्यासस्य दीर्घत्वम्। वलिलोपानुनासिकलोपौ । तनोत्या[1]दिः द्रष्टव्यः । सुष्टु संपन्नता सुभूतं मह्यं मदर्थं **पीपिहि** । मह्यं ज्यैष्ठ्यं सम्यगनुष्ठानेन प्राशस्त्यं यथा स्यादिति । गतमन्यत् ॥

[2]अथैनं दिशोऽनुप्रवाहयति—**त्विष्यै त्वे**त्यादि ॥ त्विष्याद्यर्थं त्वां क्षारयामि प्रतिदिशम् ॥

[3]पूर्वस्मिन्खरे राजतं रुक्मं निधाय तस्मिन्महावीरं प्रतिष्ठापयति—**धर्मासी**ति ॥ **धर्मा** धारयिता विश्वस्य **असि** । **सुधर्मा** धारणं धर्मः तच्छोभनं यस्य स सुधर्मा । 'सोर्मनसि' इत्युत्तरपदाद्युदात्तत्वम् । **अमेनी** अक्रुध्यन् । मन्यते अभिमन्यत इति मेनिः । ग्रहादिलक्षणो णिनिः । 'नयमन्योरलिङ्गत्वम्' इति नकारः [एकारः] । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । मिदोवा हिंसाकर्मणः औणादिके निप्रत्यये—मेनिः हिंसकः । ततो नञ्समासे 'सुपां सुलुक्' इति पूर्वसवर्ण ईकारः । तादृशः त्वं **अस्मे** अस्मासु **ब्रह्माणि** अन्नानि ब्राह्मणान्वा **धारय** स्थापय

---

[1]तस्येत्या.

न्यस्मे । ब्रह्माणि धारय । क्षत्त्राणि धारय । विशं धारय । नेत्त्वा वातस्स्कन्दयात् ॥ ३७ ॥ [4]अमुष्य त्वा प्राणे सादयामि । अमुना सह निरर्थं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । [5]पूष्णे शरसे स्वाहा । ग्रावभ्यस्स्वाहा । प्रतिरेभ्यस्स्वाहा । द्या-

विधेयीकुरु । इति ब्राह्मणस्य । क्षत्राणि बलानि क्षत्रियान्वा धारय । इति राज्ञः । विशं प्रजाः सर्वा धारय । इति वैश्यस्य । अत्र स्थितं त्वां वातोपि नेत् नैव स्कन्दयात् स्कन्दयेत् चालयेत् ॥

[4]अथ यद्यभिचरेत् अनेन सादयति—अमुष्येति ॥ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अमुष्य अमुकनाम्नः प्राणे त्वा सादयामि हे महावीर! । ततः अमुना अमुकनाम्ना त्वया निर्दग्धप्राणेन सह त्वमपि निरर्थं गच्छ कृत्याभावात् समाप्तिं गच्छ । अर्थाभावे निः । अर्थाभावेऽव्ययीभावः । समासान्तोदात्तत्वम् ॥

[5]अथैताञ्छकलान् षडुपयमने जुहोति—पूष्णे शरस इति ॥ पूष्णे पूषयित्रे अस्माकं शरसे शर्महेतवे शत्रूणां वा हिंसकाय एतत्कर्मसम्बन्धिने देवगणाय स्वाहुतमिदमस्तु । गृणन्ति शब्दायन्त इति ग्रावाणः मध्यमस्थानस्था वाचः । प्रतिरन्ति वर्धयन्ति प्रजा इति प्रतिराः प्राणाः । इगुपधलक्षणः कः । घर्मस्यैव पातारः घर्मपाः ॥

वापृथिवीभ्याꣳ स्वाहा । पितृभ्यो घर्मपेभ्यस्स्वाहा । [6]रुद्राय रुद्रहोत्रे स्वाहा ॥ ३८ ॥ [7]अहर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषाꣳ स्वाहा । रात्रिर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिः-

[6]षष्ठं शकलं सर्वेषु लेपेष्वङ्क्त्वाऽनन्वीक्षमाण उदञ्चं निरस्यति—

**रुद्राय रुद्रहोत्र इति** ॥ रुद्र एव होता आह्वाता यस्य नाम रुद्र आह्वातुमर्हतीति स्वस्य स्वयमेव होता यस्य स रुद्र होता । 'ऋतश्छन्दसि' इति कबभावः ॥

[7]रौहिणयोर्मन्त्वः—**अहरित्यादि** ॥ धानादिहोमपञ्चकानन्तरं दक्षिणस्य शकलहोमात्प्रागुत्तरस्य **अह**राख्यं **ज्योतिः** द्योतमानं वा । अहः ज्योतिष्मद्वा **ज्योतिषां** मध्ये । **सुज्योतिः** शोभनज्योतिष्कं भवतु **केतुना** आत्मनः केतयित्रा आदित्येन **जुषतां** संगच्छतां **स्वाहा** स्वाहुतमिदमस्तु तस्मै । **रात्रि**रपि आत्मनः केतयित्रा चन्द्रमसा संगच्छताम् । यद्वा अहश्च रात्रिश्च केतुना आदित्येन जुषतां तमेव वरयितुं[1] पुरस्तादवस्ताच्च अहोरात्राभ्यां प्राणापानस्थानीयाभ्यां आदित्यो धार्यते इति । ब्राह्मणं च— 'तस्मादसावादित्योऽमुष्मिन् लोकेऽहोरात्राभ्यां धृतः'* इति ॥

[8]अग्निहोत्रे समिधोराधानमन्त्रौ—**अपीपर इति** ॥ प्रथमः सायं होमस्य । द्वितीयः प्रातर्होमस्य । हे अग्ने **अपीपरः**

[1]वारयितु.　　* आ. ८-७.

पा॒ङ्क्ष् स्वाहा॑ । [8]अपी॑परो॒ माऽह्नो॒ रात्रि॑यै मा पाहि । ए॒षा ते॑ अग्ने स॒मित् । त॒या समि॑ध्यस्व । आयु॑र्मे दाः । वर्च॑सा माऽञ्जीः । [9]अपी॑परो मा॒ रात्रि॑या॒ अह्नो॑ मा पाहि ॥ ३१ ॥ ए॒षा ते॑ अग्ने स॒मित् । त॒या समि॑ध्यस्व । आयु॑र्मे दाः । वर्च॑सा माऽञ्जीः । [10]अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निस्स्वाहा॑ । [11]सू॒र्यो॑ ज्योति॒-

---

पूरितवानसि मां कामैः अह्नः सम्बन्धिनं मा मां अह्नो वा हेतोः । इदानीं रात्र्यै मा पाहि रात्रिसम्भविभ्यो व्यसनेभ्यो मां रक्ष । एषा तुभ्यं समित् दीयते । तया समिध्यस्व सम्यक् ज्वल । आयुर्मे दाः आयुर्मे देहि वर्चसा दीप्त्या मा मां अञ्जीः प्रकाशय ॥

[9]अपीपर इत्यादि ॥ रात्रौ मां कामैरपीपरः । इदानीं अह्नस्सम्बन्धिभ्यो व्यसनेभ्यो मां पाहि । शेषं समानम् ॥

[10]सायमग्निहोत्रहोममन्त्रः—अग्निर्ज्योतिरिति । एकपदा त्रिष्टुप् ॥ अग्निरेव ज्योतिरादित्यः आदित्य एवाग्निः इदानीं अग्नावादित्यस्य समारूढत्वात् । यथा 'उभे हि तेजसी संपद्येते' * इति । रात्रावग्नेः प्राधान्यात् तस्य प्रथमं ग्रहणं अस्मिन्मन्त्रे । तस्मै सूर्यसहिताय अग्नये स्वाहुतमिदमस्तु । यद्वा—अग्निरेव ज्योतिः द्योतमानम् । इदानीमग्निरेवादित्यः । तस्मादग्निरेव ज्योतिः ।

---

* ब्रा. २-१-२.

ज्योति॒स्सूर्य॒स्स्वाहा॑ । [12]भूस्स्वाहा॑ । [13]हु॒त२ँ ह॒विः । मधु॑ ह॒विः । इन्द्र॑तमे॒ऽग्नौ । पि॒ता नो॑ऽसि॒ मा मा॑ हि२ँसीः । अ॒श्याम॑ ते देव घर्म । मधु॑मतो॒ वाज॑-

स्मादग्नये स्वाहेति । एवं ह्यसंसर्ग उपपद्यते । संसृष्टिहोमे मन्त्रान्तरस्य विधानात् ॥

[11]अथ प्रातरग्निहोत्रहोममन्त्रः—सूर्य इति । त्रिष्टुबेकपदा ॥ पूर्वेण गतार्थः ॥

[12]भूस्स्वाहेति ॥ अयमपि होममन्त्रः । विकल्प इत्येके । भूरिति गार्हपत्ये अन्यत्रान्येनेत्यन्ये । ब्राह्मणं च 'भूस्स्वाहेत्येव होतव्यम्'* इति ॥

[13]सर्वे समुपहूय भक्षयन्ति—हुतं हविरिति ॥ हुतं हविः असि हुतस्य घर्मस्य हविषश्शेषः त्वमसि हे घर्मशेष! त्वं हि मधु मधुरं हविः होमार्हं च । तस्मात् इन्द्रतमे ईश्वरतमे अग्नौ स्वादिष्ठं आदित्ये प्राणे वा हुतं हविस्त्वमसि । तस्मादस्माकं भक्षयतां पिता माता त्वमसि । तस्मात् मा मा हिँसीः हे देव! द्योतनशील! घर्म! ते अश्याम भक्षयितुं शक्ताः भूयास्म । कीदृशस्येति चेत् मधुमतः माधुर्यवतः वाजवतः वेगवतः पितुमतः अन्नवतः अङ्गिरस्वतः अङ्गिरोभिः तद्वतः तैरपि भक्षितत्वात् स्वधाविनः अमृतत्ववतः पुष्टिमतो वा इत्थं महा-

* आ. ८-८.

वतः पितुमतः । अङ्गिरस्वतस्स्वधाविनः । अशी-
महि त्वा मा मा हिꣳसीः । [14]स्वाहा त्वा सूर्यस्य
रश्मिभ्यः । [15]स्वाहा त्वा नक्षत्रेभ्यः ॥ ४० ॥

ब्रह्मवर्चसाय पीपिहि स्कन्दयाद्रुद्राय रुद्रहोत्रे
स्वाहाऽह्नो मा पाह्यग्नौ सप्त च ॥ १०॥

[1]घर्म या ते दिवि शुक् । या गायत्रे छन्दसि ।

---

गुणस्य तवाश्याम । सुहितार्थयोगे षष्ठी ज्ञापिता । अथ अशीमहि त्वा व्याप्नुयाम । त्वं प्रतिष्ठितश्चास्मासु भव । मा मा हिꣳसीः पवनातपवनाभ्याम्[1] । सर्वत्र सङ्घाभिप्रायेण बहुवचनम् । आत्माभिप्रायेण एकवचनम् । अश्नोतेराशिषि लिङि शकारलोपश्छान्दसः । अश्नोतेर्लिङि 'बहुलं छन्दसि' इति शपो लुक् ।

[14]सर्वं परिघर्म्य आसन्द्यां सादयति प्रातः—स्वाहेति ॥ सूर्यस्य रश्मीनां प्रवृत्त्यर्थं रश्मिभ्यो वा देवताभ्यस्त्वा सादयामि इत्थमिदं कर्तव्यमिति स्ववागाह प्रजापतेः ॥

[15]सायं सादयति—नक्षत्रप्रवृत्त्यर्थं नक्षत्रेभ्यो वा देवताभ्यस्त्वा सादयामीति ॥

इति सप्तमे दशमोऽनुवाकः.

---

[1]अथ प्रतिप्रस्थाता त्रीन्सन्नखान् शलाकान्मुष्टीनादाय तेषामेकमा-

---

[1]...पवनानि पावनानि पावनाभ्याम्.

ಪುಸ್ತಕದ ಸಂಖ್ಯೆ A-99



या ब्राह्मणे । या हविर्धाने । तां तं एतेनावयजे स्वाहा । घर्म या तेऽन्तरिक्षे शुक् । या त्रैष्टुभे छन्दसि । या राजन्ये । याऽग्नीध्रे । तां तं एतेनावयजे स्वाहा ॥ ४१ ॥ घर्म या ते पृथिव्याꣳ शुक् । या जागते छन्दसि । या वैश्ये । या सदसि । तां तं एतेनावयजे स्वाहा । [2]अनु नोऽद्यानुमतिः । [3]अन्विदनुमते त्वम् । [4]दिवस्त्वा परस्पायाः ।

---

हवनीये प्रदीप्य आस्यदघ्ने धारयति । तमध्वर्युरभिजुहोति—घर्म या ते दिवि शुगिति । तस्मिन्नपरं प्रदीप्य नाभिदघ्ने धारयति तमध्वर्युरभिजुहोति—घर्म या ते अन्तरिक्षे शुगिति । तस्मिन्नपरं प्रदीप्य जानुदघ्ने धारयति तमध्वर्युरभिजुहोति—धर्म या ते पृथिव्यां शुगिति । हे घर्म ! द्युप्रभृतिषु तव या शुक् पापं[1] तां त्वदीयां त्वत्कर्तृकां वा लोकस्य बाधिकां एतेन होमेन अवयजे नाशयामि । द्युप्रभृतिचतुष्टयं उत्तमस्थानमुक्तम् । अन्तरिक्षादिचतुष्टयं मध्यमस्थानं उक्तम् । पृथिव्यादिचतुष्टयमधमस्थानमुक्तम् ॥

[2–3]उपनिष्क्रामन्ति—अनु नोऽद्यानुमतिरन्विदनुमते त्वमिति ॥ द्वयोरनुष्टुभोः प्रतीकग्रहणम् । व्याख्याते चेमे "इदं वामास्ये"* इत्यत्र ॥

[4]प्रथमद्वितीयतृतीयविभागेनाध्वसु प्रव्रजतां त्रयो मन्त्राः—दिव-

---

[1]तापः *सं. ३-३-११.

अन्तरिक्षस्य तनुवः पाहि। पृथिव्यास्त्वा धर्मणा॥ ४२॥ वयमनुक्रामाम सुविताय नव्यसे । [5]ब्रह्मणस्त्वा परस्पायाः । क्षत्रस्य तनुवः पाहि । विशस्त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे । [6]प्राणस्य त्वा परस्पायै । चक्षुषस्तनुवः पाहि ।

---

स्त्वेत्याद्या बृहतीविशेषाः वयमन्ताः तृतीयाः पादाः ॥ अत्र घर्मं प्रति परिपालनप्रार्थनावाचोयुक्तिं त्रेधा लोकादिषु करोति । हे घर्म ! दिवस्सबन्धिनी तव या परस्पा प्रकृष्टं पालनं तदर्थं त्वामनुक्रामाम अनुगच्छामः प्रकर्षेण दिवं पाहीति । स त्वं अन्तरिक्षस्यापि सम्बन्धिनीः तनुवः पाहि शरीराणि अन्तरिक्षचारिणो गन्धर्वान् शरीरिणः पाहि स्पष्टार्था । अथ पृथिव्यास्सम्बन्धिना धर्मणा धारणेन पालनेन रक्षाकर्मणा वा प्रसिद्धेन इत्थंभूतं त्वां वयमनुक्रामाम पृथिवीमपि धारयेति । प्रार्थितमेतेन सुविताय फलाय एवं लोकानां सुरक्षितत्वात् तेषु भोगफलं सुखेन गम्यं भवति । तन्वादित्वादुवङ् । सूपमानात्क्तदुत्तरपदान्तोदात्तत्वम् । नव्यसे अभिनवतराय फलाय अनुक्रामामेति ॥

[5]ब्रह्मणस्त्वेति ॥ द्वितीयेन तेषु लोकेषु प्रजापालनप्रार्थना पूर्वेण गता ॥

[6]प्राणस्य त्वेति ॥ तृतीयया तासु प्रजासु प्राणप्रार्थना अत्र स्पष्टा । तादर्थ्ये चतुर्थी ॥

श्रोत्रस्य त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे । [7]वल्गुरसि शंयुधायाः ॥ ४३ ॥ शिशुर्जनधायाः । [8]शं च वक्षि परि च वक्षि । [9]चतुस्स्रक्तिर्नाभिर् ऋतस्य । [10]सदो विश्वायुश्शर्म सप्रथाः ।

---

[7]उदकुम्भमादायाध्वर्युस्त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन् पर्येति—वल्गुरिति ॥ वल्गुः शोभनः असि । वलगनशीलो वा । शंयुधायाः शंयुः उदकं सुखहेतुत्वात् तस्य धाता धारयिता शंयुधायाः 'वहिहाधाञ्भ्यश्छन्दसि' इति कारकपूर्वत्वादसुन् । पूर्वपदप्रकृतिस्वरत्वं च शिशुः शितधीः जनधायाः जनानां सर्वेषां धारयिता। पूर्ववदसुन् स्वरश्च ॥

[8]निधाय कुम्भं त्रिः प्रतिपर्येति—शं च वक्षीति ॥ सम्यक्च सर्वतश्च वह यद्वोढव्यम् । वर्णान्यत्वं छान्दसं वहेर्लेटि शपो लुक् ॥

[9]उत्तरं नाभिमभिमृशति—चतुस्स्रक्तिरिति ॥ चतुस्स्रक्तिः चतुष्कोणा ऋतस्य यज्ञस्य भूमेः नाभिः नहनस्थानं त्वमसि हे प्रवर्ग्य ! ॥

[10]उत्तरवेदिमभिमृशति —सद इति ॥ सदस्थानं च त्वमसि । कीदृशं? विश्वायुः विश्वमायुः येन तादृक् शर्म शरणं सुखहेतुर्वा सप्रथाः प्रथावत् विस्तीर्णम् । लिङ्गव्यत्ययः । यस्मात्सर्वस्य ईदृशं सुखस्थानं त्वमसि तस्माद्वयमपि त्वामाश्रित्य ईदृशा भूयास्म ॥

[11]अप द्वेषो अप ह्वरः । अन्यव्रतस्य सश्चिम । [12]घ-
र्मैतत्तेऽन्नमेतत्पुरीषम् । तेन वर्धस्व चा च प्या-
यस्व । वर्धिषीमहि च वयम् । आ च प्यासिषी-
महि ॥ ४४ ॥ [13]रन्तिर्नामासि दिव्यो गन्धर्वः । त-

---

[11]मार्जालीयदेश उच्छिष्टखरम्—अपद्वेष इति । द्विपदा गायत्री ॥ द्वेषः द्वेषयुक्तं ह्वरः कुटिलं पापम् । द्विष अप्रीतौ, ह्वृ कौटिल्ये, द्वाभ्यामसुन् । अन्यव्रतस्य अन्यत् ज्योतिष्टोमादिव्यतिरिक्तमशास्त्रीयं व्रतं कर्म यस्य तस्य ह्वरः तेन युक्तं वधादिप्रयोगश्च उभयमपि अपसश्चिम अपनयामः । छान्दसोऽडादेशस्य लुक् नकारोपजनह्रस्वत्वे । छान्दसे लिटि उत्तमपुरुषबहुवचने छान्दस उपधालोपः व्यत्ययेन परस्मैपदम् ॥

[12]पात्राणि पूरयति यान्यासेचनवन्ति दध्ना मधुमिश्रेण—घर्मैति। हे घर्म ! एतत् दध्यादि तव अन्नं अदनीयं एतच्च तव पुरीषं पूरणं आप्यायनम् । तस्मात् तेन अनेन वर्धस्व च अन्नत्वाच्चिरमेनेन जीवय आप्यायस्व च । तेन पूरणत्वात् पुष्टदेहो भव । ततस्त्वत्प्रसादात् वयं अपि वर्धिषीमहि च आप्यासिषीमहि च । वर्णान्यत्वं छान्दसं, विकारान्तरं वा सकारः ॥

[13]अथैनमुपतिष्ठते—रन्तिर्नामासीति ॥ हे घर्मपुरुष ! रतिहेतुस्त्वं भूतानामसि । 'क्तिचि क्तौ च' 'न क्तिचि दीर्घश्च

ह्यं ते पद्वद्धविर्धानम् । अग्निरध्यक्षाः । रुद्रोऽधिप-
तिः । समहमायुषा । सं प्राणेन । सं वर्चसा । सं
पयसा । सं गौपत्येन । सꣳ रायस्पोषेण ॥ ४५ ॥
ऽयसौ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । [14]अ-
चिक्रदद्वृषा हरिः । महान्मित्रो न दर्शतः । सꣳ

इति दीर्घत्वलोपयोरभावः । वृषादिर्द्रष्टव्यः । क्तिरेव[1] छान्द-
सो लोपाभावः । **दिव्यः** दिवि भवः **गन्धर्वः** गोर्वाचः उद-
कस्य पृथिव्या वा धारयिता । **तस्य** तादृशस्य **ते पद्वत्**
पादा विवर्तत[2] **हविर्धानं** प्रतिष्ठानहेतुत्वात् । **अग्निरध्यक्षाः** अ-
ध्यक्षिता रक्षिता सामीप्यादाहवनीयः । अक्षतेः 'गतिकारकयोरपि'
इत्यसुन् । **रुद्रोऽधिपतिः** स्वामी तवात्र । अत ईदृशेन महा-
नुभावेन त्वया अहमपि आयुरादिभिः सङ्गंसीय । **असौ** तु
अमुकनामा विहीयतां आयुरादिभिः । योग्यक्रियापदाध्याहारः
ससाधनक्रियावाचित्वादुपसर्गाणाम् । अदश्शब्दः अन्तोदात्तः 'उ-
दात्तस्वरितयोः' इत्याकारः स्वर्यते । असावित्युक्तम् । क इत्या-
ह—**य** इत्यादि ॥

[14]**अचिक्रददिति** गायत्री ॥ **अचिक्रदत्** क्रन्दयति स्तनयति
**वृषा** वर्षतेः अनि णिजन्तात् लुटि वृषादिः । **हरिः** मनोहरः[3]
प्राणिनाम् उपमानपदं वा इन्द्र इव वर्षिता । **महान्** पूजितः

[1]तिरेव वा इति युक्तम् । [2]पादाविवर्ते कर्थता [ पादाविव वृत्तावनेकार्थता ].
[3]हरन्.

सूर्येण रोचते । [15]चिर्दसि समुद्रयोनिः । इन्दुर्दक्षं-
श्श्येन ऋतावा । हिरण्यपक्षश्शकुनो भुरण्युः ।
महान्थ्सधस्थे ध्रुव आनिषत्तः ॥ ४६ ॥ नमस्ते
अस्तु मा मा हिꣳसीः । [16]विश्वावसुꣳ सोमगन्ध-
र्वम् । आपो ददृशुषीः । तदृते नाव्यायन्न् । तदन्व-
वैत् । इन्द्रो रारहाण आसाम् । परि सूर्यस्य परि-

मित्रो न प्रिय इव दर्शतः दर्शनीयः अयं सूर्येण संरोचते समं दी-
प्यते रोचतां वा ॥

[15]चिदसीति पङ्क्तिः चतुष्पदा यजुरन्ता ॥ अग्नौ* व्याख्याता ॥

[16]विश्वावसुमिति ॥ अतः पराः तिस्रस्त्रिष्टुभः—आप इति प्रथमपादान्ता । एताभिः तिसृभिः आदित्यपर्जन्यद्वारेण वृष्टेः प्रवर्तयितारं घर्मपुरुषं स्तौति । विश्वावसुं विश्वानि वसूनि वरिष्ठानि उदकानि उदकहेतवो रश्मयो वा यस्मिन् तं सोमगन्धर्वं सोमेन हेतुना गन्धर्वं गोरुदकस्य धारयितारं यागाभिनिवृत्तिद्वारेण वृष्टेरुत्पादयितारं आपः ददृशुषीः दृष्टवत्यः । तत् तत्र आदित्ये 'सुपां सुलुक्' इति लुक् । ऋते सत्ये अविनाशे यज्ञात्मनि वा नावि नौस्थानीये गगनार्णवमध्यवर्तिनि परमात्मनि महार्णवमध्यवर्तिनि वा आयन् अवस्थितः । नौशब्दात् सप्तम्याः 'सावेकाचः' इत्युदात्तत्वे 'उदात्तस्वरितयोः' इत्यादिना स्वरितत्वम् ।

*सं. ४-७-१३.

धीः᳚ रंपश्यत् । [17]विश्वावंसुरभि तं नों गृणातु । दिव्यो गंन्धर्वो रजंसो विमानंः । यद्वां घा सत्यमुत

---

अथ इन्द्रः तासां अयनं अन्वबैत् अनुक्रमेण गतवान् । अथ रारहाणः आसां सूर्यसम्बन्धिनीनां राहणं तत्र स्थानात् च्यावनात् वृष्टिं कर्तुं क्षम इन्द्र आसां परिधीन् परितो धारयितॄन् मेघान् पर्यपश्यत् सर्वत उदपादयत् यथा सूर्यस्य परिधिस्थानीयान् समन्ताच्छेषयितॄन् वर्षहेतून् मेघान् पर्यपश्यत् । ते च सूर्यात् स्वात्मनि सङ्क्रान्तमुदकं पृथिव्यां मुञ्चन्तीति ॥

[17]विश्वावसुरित्यादि ॥ विश्वावसुः अपामर्थज्ञो दिवि भवः दिव्यः गन्धर्वः अपां धारयिता रजसः उदकस्य विमानः विविधनिर्माता परिच्छेत्ता वा नः अस्मदर्थं तं इन्द्रं अभिगृणातु वृष्ट्यर्थमुत्साहयतु । यद्वा—तदुदकस्य स्थानं स एव नः अस्मभ्यं अभिगृणातु आभिमुख्येन शब्दयतु कथयतु । कस्मादेवमुच्यत इति चेत्—यच्च सत्यं चक्षुषा दृष्टं "चक्षुर्वै सत्यम्"* यदपि न विद्म मनसाऽपि न जानीमः सर्वं तत् स एवाभिगृणातु तेन विना को विजानीयात् । अथवा—यच्चापि सत्यं आत्मस्वरूपं तदपि यस्मान्न विद्म न जानीमः तस्मात्स एवाभिगृणातु अस्माकं धियः कर्माणि हिन्वानः प्रेरयन् प्रवर्तयन् स एवास्माकं धियः कर्माणि प्रज्ञा वा अव्यात् रक्षतु तर्पयतु वा वृष्टिद्वारेण । युक्तमिदं प्रकाशप्रदानेन यः कर्मसु प्रेरयति स एव वृष्टिप्रदानेन रक्षितुं तर्पयितुं वा अर्हतीति । रहि गतौ भौवादिकः ।

---

*ब्रा. १-१-४.

**यन्न विद्म ॥ ४७ ॥ धियो हिन्वानो धिय इन्नो अव्यात् । [18]सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद्दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतानि वोचत् । [19]इन्द्रो दक्षं परिजानादहीनम् । [20]एतत्त्वं**

---

हिवि प्रीणने दैवादिकः । स्वादिभ्यः श्नुः । ताच्छीलिके चानशि मुगभावः तस्मादित्यस्य ज्ञापितत्वात्; यथा—"अपि शाकं पचानस्य" इति ॥

[18]**सस्निमविन्ददित्यादि** ॥ अत्र वृष्टिक्रमं दर्शयति—**नदीनां** नदनशीलानां अपां **चरणे** सञ्चारणायां वृष्टौ **सस्नि** शोधनं शुद्धं वा मार्गं स **गन्धर्वः अविन्दत्** विन्दति लभते प्रथमम् । ततोऽयं **अश्मव्रजानां** अश्म व्यापकं अन्तरिक्षं व्रजं स्थानं येषां तेषां मेघानां **दुरः** अपां द्वाराणि **अपावृणोत्** उद्घाटितवान् । ततः **आसां** अपां **अमृतानि** रूपाणि **प्रावोचत्** ब्रवीति व्याकरोति प्रजाभ्यः इदमुदकं इदमस्य रूपं इयं वृष्टिरिति ॥

[19]अथेन्द्रस्य प्रवृत्तिमाह—**इन्द्रो दक्षमिति** ॥ **इन्द्रः** पर्जन्यः **दक्षं** उदकदानसमर्थं मेघं **परिजानात्** सर्वात्मना जानाति अहीनं अनल्पोदकम् । तादृङ्मेघं वृष्टौ नियुङ्क्ते इति भावः । यद्वा—अहीनामिति मेघानां मध्ये । वर्णविकारश्छान्दसः । अहीनां इनं वा । सर्वथा 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—अन्हां समूहः क्रतुः अहीनः । 'अन्हः खः

**दे॒व घ॑र्म दे॒वो दे॒वानुपा॑गाः । [21]इ॒दम॒हं म॑नु॒ष्यो॑ म॒नु॒ष्यान्॑ । सोम॑पी॒था॒ऽनु मेहि॑ । स॒ह प्र॒जया॑ स॒ह रा॒यस्पोषे॑ण । [22]सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु ॥**

क्रतौ' इति खः । वृष्टिप्रदानदक्षं क्रतुमिन्द्रो जानाति । प्रदर्शनत्वात् क्रतुमात्रं गृह्यते । तादृशं क्रतुं इन्द्रो वृष्टौ नियुङ्क्ते । ततः तत्सामर्थ्येन वृष्टिर्भवति । तत्र प्रत्ययाद्युदात्तत्वेन ईकार उदात्तः । तादृशश्च क्रतुरयमेव घर्म इति घर्मपुरुष एव स्तुतो भवति ॥

[20]अभिमन्त्रयते—**एतदिति*** ॥

[21]प्रदक्षिणमावर्तते—**इदमिति*** ॥ उभयं 'त्वं सोम'* इत्यत्र व्याख्यातम् । अत्र घर्मेति विशेषः । सोमपीथेति । हे घर्म ! **सोमपीथा** सोमपीथेषु सोमपानवत्क्रतुषु, सोमपान एव वा निमित्ते । 'सुपां सुलुक्' इत्याकारः । अन्वेहि मां अनुगच्छ **प्रजया रायस्पोषेण** च मह्यं देयेन सहागच्छ । ओमाङोरेकादेशस्य पूर्व प्रत्यन्तवद्भावेन आङ्ग्रहणेन ग्रहणात् 'ओमाङोश्च' इति पररूपत्वम् । एकादेशस्वरेण एकार उदात्तः ॥

[22]मार्जालीयदेश उच्छिष्टखरे मार्जयन्ते—**सुमित्रा न इति** ॥ 'उरुं हि राजा'† इत्यत्र व्याख्यातम् ॥

---

* सं. १-३-४. †सं. १-४-४५.

४८ ॥ दुर्मित्रास्तस्मै भूयासुः । यो॑ऽस्मान्द्वेष्टि॑ । यं
चं वयं द्विष्मः । [23]उद्वयं तम॑सस्परि॑ । [24—25]उदु त्यं
चित्रम् । [26]इममूषु त्यमस्मभ्यꣳ सनिम् । गायत्रं
नवी॑याꣳसम् । अग्ने॑ देवेषु प्रवो॑चः ॥ ४९ ॥

याऽग्नीध्रे तां तं एतेनावंयजे स्वाहा धर्मणा
शंयुधायाः प्यासिषीमहि पोषेण निषत्तो
विद्म संत्वष्टौ चं ॥ ११ ॥

---

[23]आदित्यमुपतिष्ठते—उद्वयं तमस इति* ॥

[24—25]गार्हपत्ये जुहोति—उदु त्यं चित्रमिति द्वाभ्याम् † ॥ एता-स्तिस्रो गायत्र्यः व्याख्याताः । अत्रासां प्रतीकग्रहणम् ॥

[26]आहवनीये जुहोति—इममूषुत्यं इति गायत्र्या ॥ हे **अग्ने !** **इममूषु त्यं** तं इममेव **सनिं** संभजनीयं अस्मदीयं त्वदीयं वा लाभं यज्ञात्मकं **गायत्रं** स्तोतव्यं प्रशस्तं **नवीयांसं** अभिनवतरं अभूतपूर्वं **देवेषु** देवसङ्घेषु **प्रवोचः** सुष्ठु प्रब्रूहि व्याकुरु सम्यगिष्टमनेनेति ख्यापय । अस्मभ्यं अस्मदर्थं अस्मदुपकारार्थं इममेव यथाऽनुष्ठितं समीचीनं प्रब्रूहि अयमस्माकं तव च लाभ इति भावः ॥

इति सप्तमे एकादशोऽनुवाकः.

---

*सं. ४-१-७. †सं. १-४-४३.

[1]म॒ही॒नां पयो॑ऽसि॒ विहि॑तं देव॒त्रा । [2]ज्यो॒ति॒र्भा अ॑सि॒ वन॒स्पती॑ना॒मोष॑धीना॒ꣳ रसः॑ । [3]वा॒जिनं॑ त्वा वा॒जिनोऽव॑नयामः । ऊ॒र्ध्वं मनः॑ सुव॒र्गम् ॥५०॥१२

[1]अस्क॒न्द्यौः पृ॑थि॒वीम् । अस्का॑नृष॒भो यु॒वा गाः । स्क॒न्नेमा विश्वा॒ भुव॑ना । स्क॒न्नो य॒ज्ञः प्रज॑नयतु ।

---

[1]महावीरे गोपय आनयति—महीनामिति ॥ हे गोपयः ! महीनां महनीयानां गवां पयोसि देवत्रा देवेषु देवनिमित्तं विहितं क्लृप्तम् ॥

[2]मध्वानयति—ज्योतिर्भा इति ॥ हे मधो ! ज्योतिर्भाः ज्योतिषामपि भासयितृ त्वं असि वनस्पतीनां ओषधीनां च रसः सारः ॥

[3]दध्यानयति—वाजिनमिति ॥ हे दधि ! वाजिनं अन्नवन्तं अन्नहेतुं त्वा त्वां अवनयामः वाजिनः अन्नवन्तः वयं अन्नलिप्सावन्तः ऊर्ध्वं उच्छ्रितं त्वां मनः मननीयम् । यद्वा—उच्छ्रितस्य मनसो हेतुं सुवर्गं स्वर्गं सुखरूपं स्वर्गहेतुं वा ॥

इति सप्तमे द्वादशोऽनुवाकः.

---

[1-3]यदि घर्मः स्कन्देत् अस्कान्द्यौः इति द्वाभ्यां अनुष्टुब्-

[2]अस्कानजंनि प्राजंनि । आस्कन्नाज्जायते वृषां ।
स्कन्नात्प्रजंनिषीमहि ॥ ५१ ॥ १३ ॥

[1]या पुरस्ताद्विद्युदापंतत् । तां तं एतेनावंयजे
स्वाहां । या दंक्षिणतः । या पश्चात् । योत्तंरतः ।
योपरिंष्टाद्विद्युदापंतत् । तां तं एतेनावंयजे स्वाहां ॥
५२ ॥ १४ ॥

[1]प्राणाय स्वाहां व्यानाय स्वाहांऽपानाय स्वा-

---

गायत्रीभ्यां घर्ममभिमन्त्रयते—अस्कानिति ॥ व्याख्याते*चैते ॥

इति त्रयोदशोऽनुवाकः.

[1]यदि घर्मेण चरत्सु विद्युदापतेत् पूर्वादिषु दिक्षु यथालिङ्ग
जुहुयात् सर्वतो यदि सर्वैर्वा जुहुयात्—या पुरस्तादिति ॥
पुरस्तात् पूर्वस्यां दिशि या विद्युत् आपतत् तां तन्निमित्त-
मनिष्टं ते तव सम्बन्धि एतेन होमेनावयजे अपनयामि । दक्षि-
णादिषु विद्युदादेरनुषङ्गः ॥

इति चतुर्दशोऽनुवाकः.

[1]घर्मप्रायश्चित्तानि प्राणाय स्वाहा पूष्णे स्वाहेति ॥ द्वावनु-

---

* ब्रा. ३-७-१०.

हा । चक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वा-
हा वाचे सरस्वत्यै स्वाहा ॥ ५३ ॥ १५ ॥

[1]पूष्णे स्वाहा पूष्णे शरसे स्वाहा । पूष्णे प्रप-
थ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा । पूष्णेऽङ्घृ-
णये स्वाहा पूष्णे नरुणाय स्वाहा । पूष्णे साकेता-
य स्वाहा ॥ ५४ १६ ॥

ाकौ । प्रथमे प्राणव्यानापानचक्षुश्श्रोत्रमनोवाग्भिः सप्त होमाः ॥

इति पञ्चदशोऽनुवाकः.

---

[1]अथ पूषविशेषेभ्यः सप्तभ्यो होमः—पूषा पुष्टिकरः पशूनाम्।
शरः शर्म सुखं तद्धेतुभावेन पोषयिता हिंसिता वा शत्रूणाम् ।
प्रकृष्टः पथ्यः प्रथमः तत्र साधुः तस्मै वा हितः प्रपथ्यः । न
राणां सर्वेषामपि धारयिता नरंधिषः । पृषोदरादिः । अङ्घृणिः
आगतघृणिः आगतदीप्तिर्वा । घृणि दीप्तौ । अंहसां हन्ता
वा । नरुणः नेता । नृ नये । न रुजतीति वा नरुणः
अहिंसकः । सकेतुषु समाहितमतिषु संगतदीप्तिषु वा सकेतेषु
वा मर्यादात्मसु भवः साकेतः ॥

इति षोडशोऽनुवाकः.

---

[1]उदस्य शुष्मांद्भानुर्नार्त बिभर्ति । भारं पृथिवी न भूमं । [2]प्र शुक्रैतु देवी मनीषा । अस्मथ्सुतंष्टो रथो न वाजी । [3]अर्चन्त एके महि सामं मन्वत । तेन

[1]घर्मेष्टकामुपदधाति—उदस्येति । द्वे अक्षरपङ्क्ती चतुष्पदे ॥ बिभर्ति भारमिति प्रथमायास्तृतीयः पादः । पादादित्वादाख्यातस्य निघाताभावः । देवमनीषेति द्वितीयाया द्वितीयः पादः । अर्चन्त इति पुरउष्णिक् । घर्मशिर इति गायत्री यजुरन्ता । प्रजयेति तृतीयपादादिः । अस्य घर्मेष्टकाधारस्याग्नेः **शुष्मात्** बलात् हेतोः **भानुः** आदित्योपि **न उत् आर्त** (नोदार्त) उदार्तो नाभवत । ल्यब्लोपे पञ्चमी । अस्य शुष्ममभिसमीक्ष्य भानुरुदारमना अभवत् तेजसा महानासीत् । अर्तेर्लुङि व्यत्ययेनात्मनेपदं शपश्च लुक् । आडागमे कृते 'आटश्च' इति वृद्धिः । अयमग्निः **पृथिवी न** पृथिवीव **भारं बिभर्ति** लोकभारं वहति । भूम भूम्रा भूमवन्तं वा भारम् । 'सुपां सुलुक्' इति लुक् ॥

[2]**प्रशुक्रेति** द्वितीयेष्टकोच्यते । शुक्रा निर्मला **देवी** द्योतनवती **मनीषा** मनस एषणीया इयं इष्टका **प्रैतु** प्रयाणं यज्ञस्यारम्भं करोतु; गमनारम्भं वा स्वर्गं प्रति करोतु । **अस्मत्** अस्मत्तः अस्मत्सकाशात् प्रथमं गच्छतु **सुतष्टो रथो न** सुसंस्कृतो रथ इव **वाजी** अन्नवान् पाथेयसंभृतः अश्ववान्वा तादृशो रथ इव इयं प्रैतु ॥

[3]**अर्चन्त** इत्यादि ॥ तं इमं अग्निं **अर्चन्तः** पूजयन्तः

सूर्यमधारयन्न् । तेन सूर्यमरोचयन्न् । [4]घर्मश्शिर-स्तदयमग्निः । पुरीषमसि संप्रियं प्रजया पशुभि-र्भुवत् । [5]प्रजापतिस्त्वा सादयतु । तया देवतयाऽ-ङ्गिरस्वद्ध्रुवा सीद ॥ ५५ ॥ १७ ॥

---

एके केचित् महि महत् पर्याप्तं साम सान्त्वनं गानं वा मन्वत प्रशस्तमाराधनसाधनम् । मन्यतेः छान्दसो लङ् वर्णव्यत्ययः । तेन साम्ना इममग्निमर्चयित्वा सूर्यमधारयन् दिवि स्थापितवन्तः । तेनैव द्वारेण सूर्यमरोचयन् रोचयन्ति दीपयन्ति ॥

[4]घर्मश्शिर इति ॥ घर्मः यज्ञस्य शिरः स एवायमैष्टकोऽग्निः तस्याग्नेः पुरीषं पूरणं च त्वं असि हे इष्टके! संप्रियं सम्यक्प्रियं प्रियतमं पूरणमसि । तस्मात् त्वया उपहितया स घर्मः प्रजया पशुभिश्च इत्थंभूतः भुवत् भवतु । लेटि अडागमे शपो लुक् 'भूसुवोस्तिङि' इति गुणाभावः । विकरणव्यत्ययेन वा शः ॥

[5]प्रजापतिस्त्वा इत्यादि व्याख्यातम् * ॥

इति सप्तदशोऽनुवाकः.

---

*ब्रा. ३-१०-२.

[1]यास्ते॑ अग्न आ॒र्द्रा योन॑यो॒ याः कु॑ला॒यिनीः॑। ये ते॑ अग्न॒ इन्द॑वो॒ या उ॒ नाभ॑यः। यास्ते॑ अग्ने त॒नु-व॒ ऊ॒र्जो॑ नाम॑ । ता॒भि॒स्त्वमु॒भयी॑भि॒स्सं॑वि॒दा॒नः । प्र॒जाभि॑रग्ने॒ द्रवि॑णे॒ह सी॑द । प्र॒जाप॑तिस्त्वा सादय-तु । तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वा सी॑द ॥ ५६ ॥ १८॥

[1]कुलायिनीमुपदधाति—यास्त इति ॥ इयमतिशक्करी पञ्चप-दा यजुरन्ता। प्रथमः पादो विवृद्धः। हे अग्ने! अग्नचाधारभूते इ-ष्टके! **यास्ते** तव **आर्द्राः** रसवत्यः **योनयः** कारणभूताः ओष-धिवनस्पतयः **याः** स्वयोनयः **कुलायिनीः** कुलायवत्यः नीडार्हाः शुष्काः हे **अग्ने! ते** तव **य इन्दवः** ऐश्वर्यहेतवः योनयः **याश्च** तव **नाभयः** नहनस्थानानि योनयः हे **अग्ने! याश्च ते** तव **तनुवः** शरीराणि शरीरस्थितिहेतवः **ऊर्जो नाम** रसाः **ताभिः उभयीभिः** योनिभिः तनुभिश्च **संविदानः** ऐकमत्यं गतः हे **अग्ने! त्वं प्रजाभिः द्रविणा** द्रविणैश्च सह अस्मभ्यं देयैः **इह सीद** । 'सुपां सुलुक्' इति तृतीयाया आकारः। प्रजापतिस्त्वेत्यादि गतम् *॥

इति अष्टादशोऽनुवाकः.

* ब्रा. ३-१०-२.

[1]अग्निरसि वैश्वानरोसि । संवथ्सरोसि परिवथ्सरोसि । इदावथ्सरोसीदुवथ्सरोसि । इद्वथ्सरोसि वथ्सरोसि । तस्यं ते वसन्तश्शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः ॥ ५७ ॥ अपरपक्षाः पुरीषम् । अहोरात्राणीष्टकाः । तस्य ते मासाश्चार्धमासाश्च कल्पन्ताम् । ऋतवस्ते कल्पन्ताम् । संवथ्सरस्ते कल्पताम् । अहोरात्राणि ते कल्पन्ताम् । एति प्रेति वीति समित्युदिति । प्रजापतिस्त्वा सा-

---

[1] ऐष्टिक्या चित्याऽध्वर्युरग्निमभिमृशति—अग्निरसीत्यादि ॥ अग्निः चयनात्मा त्वं असि । वैश्वानरः विश्वेषां नराणां स्वामित्वेन सम्बन्धी स त्वं संवत्सरोसि तेषामविकलप्रवृत्तिहेतुत्वात् । संवत्सरादयो व्याख्याताः* । बार्हस्पत्ययुगपञ्चकविषयाः । तस्य संवत्सराद्यात्मनः ते तव शिरःप्रभृतय अवयवाः वसन्तादिस्थानीयाः तस्य तव संवत्सराद्यात्मकत्वात् । तव मासादयः कल्पन्ताम् स्वकार्यसमर्था विधेया भवन्तु । एतीत्यादिपञ्चभिरुपसर्गैः कल्पनं विशेष्यते । एभिरर्थैर्विशिष्टः कल्पन्तामिति समन्तात् प्रकर्षेण विविधं सम्यक् उच्छ्रितं च लोकहितानुरूपं मासादयः

---

*ब्रा. ३-१०-४.

दयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवस्सीद ॥५८॥१९

[1]भूर्भुवस्सुवः । [2]ऊर्ध्व ऊषुणं ऊतये। [3]ऊर्ध्वो नंः पाह्य१ंहंसः । [4]विधुं दंद्राण१ं समने बहूनाम् । यु-

कल्पन्तामिति यावत् । प्रजापतिस्त्वेत्यादि गतम्* । ध्रुव इति पुल्लिङ्गता विशेषः ॥

इति एकोनविंशोऽनुवाकः.

[1]सर्व[1]प्रायश्चित्तानि जुहोति—भूर्भुवस्सुवरिति ॥ व्याख्यातम्† ॥

[2-3]यदि महावीरः पद्येतोर्ध्व ऊषुण इति ऊर्ध्वो न इति द्वाभ्यामेनमुच्छ्रयेत । व्याख्याते चैते‡ पथ्याबृहती अस्तारपङ्क्तिश्च। अत्र तयोः प्रतीकग्रहणम् ॥

[4]यदि भिद्येत सन्दध्यात् विधुं दद्राणमिति त्रिष्टुभा ॥ अथेति चतुर्थपादादिः । विधुं विधानकुशलम् । विध विधाने । दद्राणं आद्रीयमाणम् । दङ् आदरे । समने अवैकल्ये पथि बहूनां जीवानां मार्गाणां[2] युवानं तरुणं ईदृशमेव सन्तं प्रसह्य पलितो जगार गिरति ग्रसते । यद्वा—विधुं व्यद्धव्यं[3] दद्राणं दिव्यमानुषदेहम्[4] । ताच्छीलिकश्चानश् । स्वपन्तं वा भुञ्जानं तमेव पलितो गिरति पलितत्नुकेशविकारेण तत्करणं

* ब्रा. ३-१०-२. † आ. ५-५. ‡ ब्रा. ३-६-१.

[1]घर्म. [2]समाने अवैकल्येन परिधीनां जीवनमार्गाणां.

[3]विधुं विद्धव्यं. [4]दीप्यमानं देहं.

वां॒न॒ꣳ सन्तं॑ पलि॒तो जं॑गार । दे॒वस्यं पश्य॒ काव्यं॑ महि॒त्वाऽद्या म॒मार॑ । स ह्य॒स्समा॑न । [5]यदृ॒ते चिंद॒भि॒श्रिषः॑ । पु॒राज॒र्तृभ्यं आ॒तृदः॑ । सन्धा॑ता स॒न्धि

---

जरा लक्ष्यते । किञ्च—अद्य अस्मिन्नन्हि **ममार** म्रियते गतप्राणो भवति पुरुषः **सः*** एव ह्यः पूर्वस्मिन्नहनि **समान** सम्यक् प्राणितवान् येनैवं देहस्थितिः जीवस्थितिश्चान्या च भवते तदिदं **देवस्य** भूतग्रामव्यवहारिण ईश्वरस्य **काव्यं** कवित्वं क्रान्तदर्शिनः कर्मसामर्थ्यं **पश्य महित्वा** विश्वमवष्टभ्य स्थितं महत्त्वेन वा इत्थंभूतं महाकवित्वमिति यावत् । त्वप्रत्ययान्तात् तृतीयाया आकारः । ननु दृष्टमिदं काव्यं देवस्य किमागतं महावीरस्य भिन्नस्य । अयं भावः—यथाऽयं महान् कविर्देवो युवानं पलितदेहं करोति सम्यक् प्राणन्तं च मृतं करोति तथा पलितदेहमपि युवानं कुर्यात् गतप्राणमपि सम्यक् प्राणितारम् । अतस्स देव इममपि महावीरं भिन्नं सन्दधातीति । 'निपातस्य च' इति अद्यशब्दस्य संहितायां दीर्घत्वम् ॥

[5]अथ दृढार्थे यानि संश्लेषणानि स्युः तैरेनमभिदध्यात्—यदृते चिदिति पथ्याबृहत्या ॥ हे महावीर ! **यत्** यस्मात् त्वं **ऋते चित्** यज्ञ एव यज्ञनिमित्तमेव **अभिश्रिषः** अभ्यश्लिषः । शिष्यतिः पुषादिः कपिलकादित्वात् लत्वविकल्पः । **पुरा** प्रागेव **जर्तृभ्यः** जरयितृभ्यः भेदकारणेभ्यः **आतृदः** आतर्दनात्

---

*अतः.

**मघवा पुरोवसुः ॥ ५९ ॥ निष्कर्ता विहुतं पुनः [6]पुनरूर्जा [7]सह रय्या । [8]मा नो घर्म व्यथितो विव्य- थो नः । मा नः परमधरं मा रजो नैः । मोष्वं**

---

हिंसायाः प्रागेव ते यावद्धिंसन्ति तावदेव तस्मात् यज्ञेऽभूदि त्यर्थः । उ तृदिर् हिंसायाम् । 'स्वपितृदोः कसुन्' । त- स्मात् **मघवा** इन्द्रः **पुरोवसुः** पुरस्ताद्वासयिता लोकस्य वसूनां वा पुरस्सरः स एवात्र **सन्धिं सन्धाता** अस्तु साधु सन्धानं करोतु । यत्पुनरत्र **विहुतं** कुटिलं पापं भेदनिमित्तं तदपि **निष्कर्ता** साध्वपनेताऽस्तु । उभयत्र 'साधुकारिणि' इति तृन् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[6—7]घर्मं पर्यूहति—**पुनरूर्जेति**[1] । प्रतिपरीयुः—**सह रय्येति** । गायत्र्यौ व्याख्याते भूमिर्भूम्नेत्यत्र* ॥ प्रतीकग्रहणं अत्रैतयोः ॥

[8]घर्मे व्यथिते प्रायश्चित्तानि **मा नो घर्मेत्यष्टौ—मा नो घर्मे-** ति ॥ आद्ये त्रिष्टुभौ[2] । हे **घर्म! व्यथितः** चलितः त्वमस्मान् **मा विव्यथः** मा स्म व्यथयः मा च कंपयः मा बिभीषयः । किञ्च— अस्मान् **परं** परकीयं अनात्मीयं **रजः** लोकं **मा नैः** मा नैषीः **अधरं** निकृष्टं लोकं **मा** नैषीः । 'बहुलं छन्दसि' इतीडभावे हल्ङ्यादिलोपः । अपि च—**अस्मान् तमसि** तामसे लोके व्यामोहे वा **अन्तरा** मध्ये तमसि **मा धाः** मयि माऽतिष्ठि-

---

*सं. १-५-३. [1]यदि घर्मं समभिपरीयुः पुनरूर्जेति. [2]अनुष्टुभौ.

स्माꣳ स्तमंस्यन्तरा धाः । मा रुद्रियासो अभिगुर्वृधा
नः । [9]मा नः क्रतुभिर् हीडितेभिरस्मान् । द्विषांसु-
नीते मा परांदाः । मा नो रुद्रो निर्ऋतिर्मा नो अ-
स्तां । मा द्यावांपृथिवी हींडिषाताम् ॥ ६० ॥

ः । 'गातिस्था' इति सिचो लुक् । सुशब्दस्स्वातन्त्र्यं सूच-
यति—सुष्ठु स्वैरं मा धा इति । 'सोमे सुञ्चः' इति ष-
त्वम् । किञ्च—रुद्रियासः रुद्रस्य स्वभूता गणाः प्रमथादयः
अस्मान् माऽभिगुः मा भिगमन् मास्माधिषत[1] । तदर्थं त्वं वृध
वर्धस्व मा व्यधिष्ठाः । विकरणव्यत्ययेन शः । तिङः परत्वा-
भावान्निघाताभावः ॥

[9]मा नः क्रतुभिरित्यादि ॥ क्रतुभिः कर्मभिः हीडितेभिः अ-
नादृतैः श्रद्धारहितैः हेतुभिः अस्मान् मा द्विष मा द्विक्षः । अ-
लुङ्यपि माङ् दृश्यते । ल्यब्लोपे वा अचि? अन्त्यलोपः ।
हे असुनीते! असूनां प्रापयितः! माऽस्मान् परादाः कुतश्चिदपि
कारणात् मा त्याक्षीः मा चास्मान् रुद्रो रक्षो भूत् अभिमन्य-
मानो मा हिंसीन् । ताच्छीलिके तृनि रयादित्वादिडभावः । निर्-
ऋतिः अलक्ष्मीश्च अस्मान् माऽस्ता अस्त्री माऽभूत् । द्यावापृथिव्यौ
चास्मान् मा हीडिषातां अनादृत्य मा बाधिषाताम् । हेडृ अनादरे,
वर्णविकारश्छान्दसः । ईकारोपधं वा धात्वन्तरं द्रष्टव्यम् ॥

[1]मा ग्लासिषत.

[10]उप॑ नो मि॒त्रावरुणावि॒हाव॑तम् । अ॒न्वादी॑ध्या-
था॒मि॒ह न॑स्सखाया । आ॒दि॒त्याना॑ प्रसि॑तिर् हे॒तिः ।
उ॒ग्रा श॒तापा॑ष्ठा घ॒विषा॒ परि॑णो वृणक्तु । [11]इ॒मं मे॑
वरु॒ण [12]तत्त्वा॑ यामि । [13]त्वं नो॑ अ॒ग्ने [14]स त्वं नो॑
अग्ने । [15]त्वम॑ग्ने अ॒याऽसि॑ । [16]उद्व॒यं तम॑स॒स्परि॑ ।
[17]उदु॒ त्यं [18]चि॒त्रम् । [19]वय॑स्सुप॒र्णाः ॥ ६१ ॥

पु॒रोव॑सुर् हीडिषातां॒ सुप॒र्णाः ॥ २० ॥

---

[10]उप न इति त्रिष्टुप् जगती वा ॥ उग्रान्तः तृतीयः पादः । व्याख्यातैषा* ॥

[11—15]इमं मेवरुण इत्यादीनां पञ्चानां प्रतीकग्रहणं प्रथमा गायत्री । ततस्तिस्त्रिस्त्रिष्टुभः । पञ्चम्यनुष्टुप् । व्याख्याताश्चैताः† ॥

[16—19]यदि घर्मेण चरत्स्वादित्योऽस्तमियात् अपरस्यां द्वारि दर्भेण हिरण्यं प्रबद्ध्य उद्वयं तमसस्परीत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वा प्रव्रज्य श्वोभूते वयस्सुपर्णा इति त्रिष्टुभा आदित्यमुपतिष्ठन्ते । व्याख्याताश्चैताः‡ । प्रतीकमात्रमासां गृह्यते ॥

इति विंशोनुवाकः.

---

* ब्रा. ३-७-१३. † आ. २-३. ‡ सं. ४-१-७, १-४-४३, ब्रा. २-५-८.

[1]भूर्भुव॒स्सुव॑ः । मयि॒ त्यदि॑न्द्रि॒यं म॒हत् । मयि॒ दक्षो॒ मयि॒ क्रतु॑ः । मयि॑ धायि सु॒वीर्य॑म् । [2]त्रिशु॑ग्घ॒र्मो विभा॑तु मे । आकू॑त्या॒ मन॑सा स॒ह । वि॒राजा॒ ज्योति॑षा स॒ह । य॒ज्ञेन॒ पय॑सा स॒ह । ब्रह्म॑णा॒ तेज॑सा स॒ह । क्ष॒त्रेण॒ यश॑सा स॒ह । स॒त्येन॒ तप॑सा स॒ह । तस्य॒ दोह॑मशीमहि । तस्य॑ सु॒म्नम॑शीमहि ।

---

[1]सोमे दधिघर्मं भक्षयति—**भूर्भुवस्सुवरिति** ॥ प्रथमं यजुः । ततो गायत्री । ततः कृतिः दशपदा यजुरन्ता । लोकत्रयस्थितिहेतुः **सत्** इदं दधि **मयि इन्द्रियं** इन्द्रदत्तं मयि धायि इन्द्रियहेतुर्मयि धीयते । **महत्** प्रभूतं महनीयं वा । **दक्षः** उत्साहहेतुः । **क्रतुः** प्रज्ञाहेतुः क्रियाहेतुर्वा । **सुवीर्यं** शोभनपुत्रादिवृद्धि[1] हेतुः ॥

[2]त्रिशुगित्यादि ॥ **त्रिशुक्** त्रिलोकविषया दीप्तयः यस्य तादृशोऽयं **घर्मः मे** मदीयः मम भक्षत्वेन सम्बन्धी **विभातु** । **आकूत्या** अभिप्रायेण तद्धेतुना **मनसा** च **सह** विभातु । **विराजा** अन्नेन तद्धेतुना च **ज्योतिषा** दीप्त्या **सह** । **यज्ञेन** तत्फलेन च **पयसा** वृष्ट्या सह । **ब्रह्मणा** ब्राह्मणजात्या तदीयेन **तेजसा** ब्रह्मवर्चसेन **सह** । **क्षत्रेण** क्षत्रियजात्या तदीयेन च **यशसा सह** । **सत्येन** तद्धेतुकेन च **तपसा सह** मयि विभातु ।

---

[1]शोभनवृद्धि.

तस्यं भक्षमंशीमहि । [3]तस्यं त इन्द्रेंण पीतस्य मधुंमतः । उपंहूतस्योपंहूतो भक्षयामि ॥ ६२ ॥

यशंसा सह षट्चं ॥ २१ ॥

[1]यास्तें अग्ने घोरास्तनुवंः । क्षुच्च तृष्णां च । अस्नुक्कानांहुतिश्च । अशनया चं पिपासा चं । सेदि-

---

तस्य दोहं कामानां समृद्धिं तेन कृतं अशीमहि प्राप्नुवाम । छान्दसश्शपो लुक् । तस्य सुम्नं सुखं तन्निमित्तमिहैव अशीमहि । तस्य भक्षं सर्वदा अशीमहि ॥

[3]तस्य त इन्द्रेणेत्यादि । व्याख्यातम्* ॥

इति एकविंशोऽनुवाकः.

---

[1]घोरास्तनूरादिशति—यास्त इति ॥ हे अग्ने ! यास्तव घोराः अशान्ता उग्राः तनुवः क्षुदाद्याः ताभिः अमुं अमुकनामानं अस्माकं द्वेष्टारं द्वेष्यं च गच्छ ताभिः तं बाधस्व । शिवाभिः तनूभिः अस्मान् आगच्छ । देहशोषहेतुत्वात् अग्नेः तनव एताः । क्षुध्यन्त्यनयेति क्षुत् बुभुक्षा । तृष्यन्त्यनयेति तृष्णा पिपासा । ष्णिह उद्गिरणे । शरीरान्तर्गतानां निस्सरणनिरोधिनी अस्नुक् । बहिस्स्थितानामन्नानां अन्तराहरणनि-

* स. ३-२-५.

श्चामंतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिर-
मुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥
६३ ॥ २२ ॥

[1]स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च
शीता च । उग्रा च भीमा च । सदाम्नीं सेदिरनि-

---

वारणी अनाहुतिः । अत्यर्थमशनेच्छा अशनया यया अशि-
त्वाऽप्यशिशिषति । अत्यर्थं पातुमिच्छा पिपासा पीत्वाऽपि
यया पिपासति । 'अशनायोदन्य' इति निपातनेऽपि दीर्घत्वं 'न
छन्दस्यपुत्रस्य' इति निषिद्धचते । सादयति शरीरमिति सेदिः
आलस्यहेतुः । "उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्" इति
सदेः किप्रत्ययः । अमतिः देहभञ्जिनी । अमतेः तिन् प्रत्ययः ।
मतिविपर्यासहेतुर्वा ॥

इति द्वाविंशोऽनुवाकः.

---

[1]स्निक्चेत्यादि ॥ स्निह्यन्ति भावेषु यया सा स्निक् । अ-
निष्टेऽपि विषये या स्नेहितिः सा स्नीहितिः । ण्यन्ताद्युजपवादः
क्तिन् । "तितुत्रेष्वग्रहादीनाम्" इति वचनादिटोऽप्रतिषेधः । स्ने-
हितिरिति प्राप्ते वर्णविकारश्छान्दसः । देहस्याकस्मात् स्निग्धता-
हेतुः स्निहितिश्च । अत्यर्थमुष्णकारिणी उष्णा । अत्यर्थं शी-
तकारिणी शीता । उद्गूर्णाङ्गा उग्रा या प्रजानां सर्वाण्यङ्गा-

रा । ए॒तास्ते॑ अग्ने घो॒रास्त॒नुवः॑ । ताभि॑र॒मुं गच्छ । यो॑ऽस्मान्द्वेष्टि॑ । यं च॑ व॒यं द्वि॒ष्मः ॥ ६४ ॥ २३ ॥

[1]धुनि॑श्च ध्वा॒न्तश्च॑ ध्व॒नश्च॑ ध्व॒नयँ॒श्च । नि॒लि॒म्पश्च॑ विलि॒म्पश्च॑ विक्षि॒पः ॥ ६५ ॥ २४ ॥

---

नि पुनःपुनः उत्पादयति । यया सर्वतो बिभेति जन्तुः सा भीमा । सदाम्नी संबन्धनाय स्तब्धानि चाङ्गानि[1] करोति । सेदिरुक्ता[2] । अनिरा या अनन्ना अन्नरुचिं निवर्तयति वाङ्निवृत्तिहेतुर्वा । एतास्त इत्यादि गतम्[2] ॥

इति त्रयोविंशोऽनुवाकः.

---

[1]राजसूयिको मरुद्गणः—धुनिश्चेत्यादि ॥ सप्तैतानि मरुतां नामानि । धुनिः कम्पयिता पादपानां धूनयतीति धुनिः । 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुक्, छान्दसं ह्रस्वत्वम् । धुनोतेर्वा औणादिको निप्रत्ययः । ध्वान्तवान् ध्वान्तः । अत ऊर्ध्वं भाषान्तरं—ध्वनः यः परं ध्वनिभिरन्धीकरोति वायुः । ध्वन शब्दे । पादपानां शब्दयिता ध्वनयन् । पांसुभिः लेपयिता निलिम्पः । तमपनेता विलिम्पः । गृहादीनां विक्षेप्ता विक्षिपः ॥

इति चतुर्विंशोऽनुवाकः.

---

[1]स्निग्धानि वाऽङ्गानि. [2]आ. ७-२२.

[1]उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च। सहसह्वाꣳश्च सहमानश्च सहस्वाꣳश्च सहीयाꣳश्च। एत्य प्रेत्य विक्षिपः ॥ ६६ ॥ २५ ॥

[1]अहोरात्रे त्वोदीरयताम् । अर्धमासास्त्वोदीङ्ग*यन्तु । मासास्त्वा श्रपयन्तु । ऋतवस्त्वा पचन्तु । संवथ्सरस्त्वा हन्त्वसौ ॥ ६७ ॥ २६ ॥

---

[1]उग्रश्चेत्याद्यग्निचित्यः । इन्द्रः[1] उग्रः उद्गूर्णः महावातः । धुन्यादयो व्याख्याताः† । सहसह्वान् पर्णादिभिस्सहागत्याभिभविता । सहमानः अभिभवनशीलः । सहस्वान् बलवान् । सहीयान् अतिशयेन बलवान् । एत्य इतो गत्वा विक्षेप्ता । प्रेत्य तत आगत्य विक्षेप्ता । अनियतवृत्तिः विक्षिपः ॥

इति पञ्चविंशोऽनुवाकः.

---

[1]घर्मधुक्स्तेन[2]निवारणे मन्त्रः—हे स्तेन ! अहोरात्रे त्वां उदीरयतां ऊर्ध्वं प्रेरयताम् । अर्धमासास्त्वोदीङ्गयन्तु न्यग्भूतं कुर्वन्तु । मासास्त्वा श्रपयन्तु तपन्तु । पचन्तु दहन्तु । हन्तु मारयतु असौ अमुकः ॥

इति षड्विंशोऽनुवाकः.

---

* दीङ्ग.

[1]इन्द्र इत्येतन्नास्ति कोशान्तरे. [2]घर्मधेनुस्तेन. † आ. ७-२४

[1]खट्फड्जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचंः क्रूराणि ॥ ६८ ॥ २७ ॥

[1]विगा इंन्द्र विचरंन्थ्स्पाशयस्व । स्वपन्तंमिन्द्र पशुमन्तंमिच्छ । वज्रेंणामुं बोंधय दुर्विदत्रंम् । स्वपतोंऽस्य प्रहंर भोजंनेभ्यः । [2]अग्ने अग्नि-

---

[1]वाचः क्रूराणि—खडिति ॥ खट् एनं खण्डय । फट् नाशय । फडि नाशने । जहि मारय । छिन्धि द्विधा कुरु। भिन्धि नानाकुरु । हन्धि उत्सारय । हद पुरीषोत्सर्गे। कट् आवृणु । कट आवरणे । इति वाचः क्रूराणि उक्तानि । तैरभिचरन् वषट्कुर्यात् ॥

इति सप्तविंशोऽनुवाकः.

---

[1]घर्मेण चरत्सु एकसृक आगच्छेत् वाश्येत वा तमभिमन्त्रयते—विगा इन्द्रेति ॥ हे इन्द्र! विचरन् स्वा गाः मदीया विस्पाशयस्व विविधं सञ्चारयस्व । स्वपन्तं अलसं मां पशुमन्तं इच्छ कुरु। अमुं एकसृकादिं दुर्विदत्रं दुष्टाभिप्रायं वज्रेण बोधय शिक्षय। स्वपतो मम अस्य भोजनेभ्यः । कर्मणि षष्ठी । भोजनानि प्रहर तदीयं भोजनं मम प्रयच्छ ॥

[2]उल्मुकं प्रक्षिपति—अग्ने इति ॥ हे अग्ने! अग्निना उल्मुकस्थेन संवदस्व दुष्टं नाशयितुं ऐकमत्यं व्रज। हे मृत्यो!

ना संवंदस्व । मृत्यो मृत्युना संवंदस्व । नमस्ते अस्तु भगवः । [3]सकृत्ते अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः । पञ्चकृत्वस्ते नमः । दशकृत्वस्ते नमः । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते नमः । अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिꣳसीः ॥ ६१ ॥

त्रिस्ते नमस्सप्त च ॥ २८ ॥

[1]असृङ्मुखो* रुधिरेणाव्यक्तः । यमस्य दूतश्श्वपा-

मृत्युना अग्निना संवदस्व । हे भगवः! ऐश्वर्ययुक्त! नमस्ते अस्तु ॥

[3]उपतिष्ठते—सकृदित्यादि ॥ सकृत् एकवारम् । द्विः द्विवारम् । एवमुत्तरत्र । आसहस्रकृत्वः सहस्रसङ्ख्यायाः प्राग्भूतसङ्ख्याकृत्वः । अपरिमितं अयुतादि ॥

इति अष्टाविंशोऽनुवाकः.

---

[1]यदि गृध्रो वाश्येत तमनुमन्त्रयते—असृङ्मुख इति ॥ असृङ्मुखः रुधिरपूर्णास्यः रुधिरेणाव्यक्तः आलिप्तदेहः यमस्य दूतः किङ्करः श्वपात् श्वसदृशपादः विधावसि इतश्चेतश्च धा-

* असृन्मुखो.

द्विधावसि । गृध्रस्सुपर्णः कुणपं निषेवसे । यम-
स्य दूतः प्रहितो भवस्य चोभयोः ॥ ७० ॥२९॥

[1]यदेतद्वृकसो भूत्वा । वाग्देव्यभिरायसि । द्वि-
षन्तं मेऽभिराय । तं मृत्यो मृत्यवे नय । स आ-
र्त्याऽऽर्तिमार्छतु ॥ ७१ ॥ ३० ॥

[1]यदीषितो यदि वा स्वकामी । भयेडको वदति

---

वसि । गृध्रो जात्या त्वं सुपर्णः शोभनपत्रः कुणपं निषे-
वसे । यमस्य दूतः भवस्य रुद्रस्य चोभयोः प्रहितः प्रेषितः दू-
तस्त्वमसि । तस्माद्दूतं गन्तव्यम् ॥

इति एकोनत्रिंशोऽनुवाकः.

[1]आर्ता वा वागुदीयात्तामभिमन्त्रयते—यदेतदिति ॥ हे वा-
ग्देवि! यदेतत् त्वं वृकसः आदानशीलो भूत्वा आर्तो भूत्वा
अभिरायसि शब्दयसि । तेन मम द्विषन्तं शत्रुमभिराय तदुद्दे-
शेन शब्दय। हे मृत्यो! तं द्विषन्तं मृत्यवे नय। स शत्रुः
आर्त्या पीडया आर्तिं विनाशं आर्छतु प्राप्नोतु ॥

इति त्रिंशोऽनुवाकः.

[1]भयेडकमभिमन्त्रयते—यदीषित इति ॥ यदीषितः यदि
केनचित्प्रेषितः स्वकामी स्वेच्छावान् भयेडकः कुक्कुटः एतां

वाचंमेताम् । तामिन्द्राग्नी ब्रह्मणा संविदानौ । शिवामस्मभ्यँ कृणुतं गृहेषु ॥ ७२ ॥ ३१ ॥

[1]दीर्घमुखि दुर्हणु । मा स्म दक्षिणतो वदः । यदि दक्षिणतो वदाद्विषन्तं मेऽवबाधासै॥ ७३॥ ३२

[1]इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः । तमितो नाशयाग्ने ॥ ७४ ॥ ३३ ॥

---

वाचं वदति तां वाचं ब्रह्मणा संविदानौ ऐकमत्यं गतौ इन्द्राग्नी युवां अस्मभ्यं गृहेषु शिवां कृणुतं कुरुतम् ॥

इति एकत्रिंशोऽनुवाकः.

सलावृकीमभिमन्त्रयते—दीर्घमुखीति ॥ हे दीर्घमुखि! दुर्हणु दुष्टहनो! अस्माकं दक्षिणतो मा वदः । यदि सर्वदा दक्षिणपार्श्वे वदात् शब्दयसि मम शत्रुं अवबाधासै अवबाधिष्ठाः ॥

इति द्वात्रिंशोऽनुवाकः.

उलूकमभिमन्त्रयते—इत्थादिति ॥ अयं उलूकः हिरण्यसदृशाक्षः अयस्सदृशतुण्डः इत्थात् अनेन प्रकारेण आपप्तत् आगतः । अयं रक्षसां दूत एवागतः । तमितो देशात् अग्ने! नाशय॥

इति त्रयस्त्रिंशोऽनुवाकः.

[1]यदेतद्भूतान्यन्वाविश्य । दैवीं वाचं वदसि । द्विषतो नः परावद । तान्मृत्यो मृत्यवे नय । त आर्त्याऽऽर्तिमार्छन्तु । अग्निनाऽग्निस्संवदताम् ॥ ७५ ॥ ३४ ॥

[1]प्रसार्य सक्थ्यौ पतसि । सव्यमक्षि निपेपि च । मेह कस्यचनामंमत् ॥ ७६ ॥ ३५ ॥

---

यदि भूतोपसृष्टः उन्मत्तो वदेत् तमभिमन्त्रयते—**यदेतदिति** ॥ **यदेतत्** त्वं **भूतानि** देवनिकायानि **अन्वाविश्य दैवीं** मानुषीं वा **वाचं वदसि** तेनास्माकं **द्विषतः परावद** विनष्टान् वद । **तान् मृत्यो** इत्यादि स्पष्टम् * ॥

इति चतुस्त्रिंशोऽनुवाकः.

---

शकुनिमभिमन्त्रयते—**प्रसार्येति** ॥ हे काक! **सक्थ्यौ प्रसार्य** जानुनी वितत्य **पतसि सव्यं** चाक्षि **निपेपि च** नितरां आप्यायमानं कृत्वा पतसि। इत्थं मङ्गलमपतन् इह अस्मत्पार्श्वे **कस्यचिदपि मा आममत्** मा आगमत् व्यत्यय आगमः ॥

इति पञ्चत्रिंशोऽनुवाकः.

---

* मृत्यवे नय प्रापय । ते आर्त्या आर्तिमार्छन्तु.

[1]अत्रि॑णा त्वा क्रिमे हन्मि । कण्वे॑न ज॒मद॑ग्निना । वि॒श्वाव॑सो॒र्ब्रह्म॑णा ह॒तः । क्रिमी॑णा॒ꣳ राजा॑ । अ॒प्ये॑षा॒ꣳ स्थ॒पति॑र् ह॒तः । अथो॑ मा॒ताऽथो॑ पि॒ता । अथो॑ स्थू॒रा अथो॑ क्षु॒द्राः । अथो॑ कृ॒ष्णा अथो॑ श्वे॒ताः । अथो॑ आ॒शाति॑का ह॒ताः । श्वे॒ताभि॑स्स॒ह सर्वे॑ ह॒ताः ॥ ७७ ॥ ३६ ॥

[1]आह॒राव॑द्य । शृ॒तस्य॑ ह॒विषो॒ यथा॑ । तत्स॒त्यम् । यद॒मुं य॒मस्य॒ जम्भ॑योः । आद॑धामि॒ तथा॒

---

यदि घर्मधुक् क्रिमिणा दुष्टा तं हन्यात्—अत्रिणेति ॥ हे क्रिमे! त्वामत्र्यादिभिः हन्मि । त्वं विश्वावसोः आदित्यस्य **ब्रह्मणा** मन्त्रेण हतः **क्रिमीणां राजाऽपि** हतः । **एषां स्थपतिः** स्थापयिता । **अथो** अपि च मात्रादयः । **स्थूराः** स्थूलाः । **आशातिकाः** अशिते भवाः अन्नदोषप्रभवाश्च । किं बहुना—श्वेताभिः सह अत्र्यादिभिस्सर्वे क्रिमयो हताः ॥

इति षट्त्रिंशोऽनुवाकः.

---

[1]अभिचरतो मन्त्रः—**आहरावद्येति** ॥ अमुं शत्रुं आहर । आहृत्य **अवद्य यथा शृतस्य हविषः** पुरोडाशादेः यमस्य जम्भयोः दंष्ट्रयोः **आदधामि** । इति **यत्तत्सत्यं** अमोघमस्तु य-

हि तत् । खण्फण्म्रसि ॥ ७८ ॥ ३७ ॥

[1]ब्रह्मणा त्वा शपामि । ब्रह्मणस्त्वा शपथेन शपामि । घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे । रौद्रेण त्वाऽङ्गिरसां मनसा ध्यायामि । अघस्य त्वा धारया विध्यामि । अधरो मत्पद्यस्वासौ ॥ ७९ ॥ ३८

[1]उत्तुद शिमिजावरि । तल्पेजे तल्प उत्तुद ।

---

न्मयोक्तं तथैव तद्भवति । खण्फण्म्रसि इति प्रक्षिप्यते । खण्डितो नाशितो म्रियस्वेत्यर्थः ॥

इति सप्तत्रिंशोऽनुवाकः.

---

[1]अभिव्याहरणमन्त्रः—ब्रह्मणा त्वेति ॥ ब्रह्मणा मन्त्रेण त्वा शपामि अनिष्टं प्रापयामि । ब्रह्मणः ईश्वरस्य शपथेन समयेन अलङ्घ्येन । भृगूणां घोरेण अशान्तेन चक्षुषा प्रेक्षे । अङ्गिरसां रौद्रेण मनसा ध्यायामि । अघस्य धारया आस्येन विध्यामि ताडयामि । स त्वं मत् अधरो निकृष्टः पद्यस्व असौ अमुक ! ॥

इति अष्टत्रिंशोऽनुवाकः.

गिरीꣳरनु प्रवेशय । मरीचीरुप संनुद । यावदितः पुरस्तादुदयाति सूर्यः । तावदितोऽमुं नाशय । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥ ८० ॥ ३९ ॥

[1]भूर्भुवस्सुवो भूर्भुवस्सुवो भूर्भुवस्सुवः । भुवोद्धायि भुवोद्धायि भुवोद्धायि । नृम्णायि नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णम् । निधाय्योवायि

---

[1]शत्रोर्द्वारि जपति—उत्तुदेति ॥ हे द्वारशाखे! शिमिजावरि! कर्मसामर्थ्यवति! उत्तुद उत्पीडय शत्रुम् । हे तल्पेजे! शयनस्थाने जाते! तल्पे! उत्तुद शयन एवोत्पीडय । गिरीन् पर्वतान् अनुप्रवेशय । तत्र च मरीचीः मारयित्रीः दीप्तीः उपसंनुद समीपं नीत्वा मारय । यावत् यावति काले इतः त्वत्स्थानादारभ्य पुरस्तात् सूर्यः उदयाति उदेति तावत् तावति काले इतः अस्माद्देशात् अमुं शत्रुं नाशय । योऽस्मानित्यादि गतम्* ॥

इति एकोनचत्वारिंशोऽनुवाकः.

---

[1]महापातक[1]प्रायश्चित्तम्—भूर्भुवस्सुवरिति ॥ व्याहृतयो व्याख्याताः† । भुवः भवतो[2]स्मात् स्थानात् उद्धायि उद्ध्रियतां ऊर्ध्वं नीयताम् । नृम्णे सुखे नृम्णं सुखं आत्मनि निधायि

---

*आ. ७-१०. †आ. ५-५. [1]महापाप. [2]भुवतो.

निधाय्योंवायि निधाय्यों वायि । ए अस्मे अस्मे । सुवर्न ज्योतीः ॥ ८१ ॥ ४० ॥

[1]पृथिवी समित् । तामग्निस्समिंन्धे । साऽग्निꣳ समिंन्धे । तामहꣳ समिंन्धे । सा मा समिंद्धा । आयुंषा तेजंसा । वर्चंसा श्रिया । यशंसा ब्रह्मवर्चसेनं । अन्नाद्येन समिंन्ताꣳ स्वाहां । [2]अन्तरिंक्षꣳ समित् ॥ ८२ ॥ तां वायुस्समिंन्धे । सा वायुꣳ समिंन्धे । तामहꣳ समिंन्धे । सा मा समिंद्धा । आयुंषा तेजंसा । वर्चंसा श्रिया । यशंसा ब्रह्मव-

---

निधीयताम् । ओवायि इति स्तोभः । आत्मनाम ए इत्यामन्त्रणद्योतको हेपर्यायः हे आत्मन्! सुवर्नज्योतीः आदित्यवत् ज्योतिरात्मत्वम् ॥

इति चत्वारिंशोऽनुवाकः.

---

[1]शुक्रियव्रते चतस्र औदुम्बरीः समिध आदधाति—पृथिवी समिदिति ॥ पृथिव्येव इयं समित् । तामग्निस्समिन्धे दीपयति । साऽग्निं समिन्धे समेधयति । तामहं समिन्धे समेधयामि । सा मा समिद्धा समिद्धा सा समित् आयुरादिभिः मां समिन्तां सन्दीपयतु ॥

र्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा॑ । [3]द्यौस्स॒-
मित् । तामा॑दि॒त्यस्सामि॑न्धे ॥ ८३ ॥ साऽऽदि॒-
त्यꣳ समि॑न्धे । ताम॒हꣳ समि॑न्धे । सा मा॒ समि॑द्धा ।
आयु॑षा॒ तेज॑सा । वर्च॑सा श्रि॒या । यश॑सा ब्रह्म-
वर्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा॑ । [4]प्रा॒जा॒प॒-
त्या मे॑ स॒मिद॑सि सपत्न॒क्षय॑णी । भ्रा॒तृ॒व्य॒हा मे॑ऽ-
सि॒ स्वाहा॑ । [5]अग्ने॑ व्रतपते व्र॒तं च॑रिष्यामि ॥ ८४ ॥
तच्छ॑केय॒ं तन्मे॑ राध्यताम् । [6]वायो॑ व्रतपत॒ [7]आदि॑त्य
व्रतपते । [8]व्र॒ताना॑ व्रतपते व्र॒तं च॑रिष्यामि । तच्छ॑-
केय॒ं तन्मे॑ राध्यताम् । [9]द्यौस्स॒मित् । तामा॑दि॒त्य-
स्समि॑न्धे । साऽऽदि॒त्यꣳ समि॑न्धे । ताम॒हꣳ समि॑-
न्धे । सा मा॒ समि॑द्धा । आयु॑षा॒ तेज॑सा ॥ ८५ ॥

---

[2–3]उत्तरे व्याख्याताः ॥

[4]प्राजापत्येति ॥ प्राजापत्या प्रजापतेस्स्वभूता सपत्नक्षयणी शत्रुनाशिनी समिदसि तस्मात् भ्रातृव्यहा पाप्मनां हन्त्री भव । स्वाहा सुहुतमस्तु ॥

[5–8]अथ देवता उपतिष्ठते—अग्ने व्रतपत इति ॥ हे अग्ने! व्रतपते! व्रतं शुक्रियं व्रतं चरिष्यामि । तच्छकेयं कर्तुं शक्तोऽहं भवेयम् । तत् व्रतं मे राध्यतां सिद्ध्यताम् ॥

वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा । [10]अन्तरिक्षꣳ समित् । तां वायुस्समिन्धे । सा वायुꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया ॥ ८६ ॥ यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा । [11]पृथिवी समित् । तामग्निस्समिन्धे । साऽग्निꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन ॥ ८७ ॥ अन्नाद्येन समिन्ताꣳ स्वाहा । [12]प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा । [13]आदित्य व्रतपते व्रतमचारिषम् । तदशकं तन्मे राधि । [14]वायो व्रतपतेऽ[15]ग्ने व्रतपते । [16]व्रतानां व्रतपते व्रतमचारिषम् । तदशकं तन्मे राधि ॥ ८८ ॥

समिध्समिन्धे व्रतं चरिष्याम्यायुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनाष्टौ च ॥ ४१ ॥

---

[9–12]व्रतविसर्गे द्यौस्समिदित्यादि प्रतीपम् ॥

[13–16]आदित्येत्यादि उपस्थानमन्त्राः । व्रतानामिति चतुर्थः ॥

इति एकचत्वारिंशोऽनुवाकः.

[1]शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः। अहानि शं भवन्तु नश्शꣳ रात्रिः प्रति धीयताम्। शमुषा नो व्युच्छतु शमादित्य उदेतु नः। [2]शिवा नश्शन्तमा भव सुमृडीका सरस्वति। मा ते व्योम संदृशि। [3]इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुस्स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः। [4]प्रतिष्ठाऽसि प्र-

---

[1]उत्तरां शान्तिमुपयन्ति—शं न इति ॥ शं सुखं वातादयः अस्माकं सुखहेतुं कुर्वन्तु । रात्रेः अह्नः प्रतिरूपकत्वेन धीयतां राज्ञः प्रतिहर्तैव [रात्रिरप्रतिहर्तैव] स्थाप्यताम् । उषाः व्युच्छतु विभातु ॥

[2]शिवा न इति व्याख्यातम्* । हे सरस्वति! नः शिवा त्वं शन्तमा भव सुष्ठु सुखयित्री च । तव सन्दृशि सम्यक्-दर्शने वर्तमानानां अस्माकं मा व्योम स्यात् मा शून्यता स्यात् ॥

[3]इडायै वृष्टेः वास्तु गृहं असि । वास्तुमत् अभ्यन्तर-ग्रहयुक्तम् । मा वास्तोः छित् स्महि भिन्ना मा भूम शत्रुः अवास्तुर्भूयात् ॥

---

*आ. १-१.

तिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छिथ्स्मह्य-
प्रतिष्ठस्स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।
[5]आ वात वाहि भेषजं वि वात वाहि यद्रपः। त्व-
ꣳहि विश्वभेषजो देवानां दूत ईयसे । [6]द्वाविमौ
वातौ वात आसिन्धोरापरावतः ॥ ८१ ॥ दक्षं
मे अन्य आवातु पराऽन्यो वातु यद्रपः। [7]यददो वा-
त ते गृहेऽमृतस्य निधिर् हितः। ततो नो धेहि
जीवसे ततो नो धेहि भेषजम् । [8]ततो नो मह
आवह वात आवातु भेषजम् । शंभूर्मयोभूर्नो

---

[4]प्रतिष्ठाऽसीति अनेन व्याख्यातम् ॥

[5]हे वात! भेषजं औषधं आवाहि आगमय । यत् रपः दुष्टं विवाहि विगमय । विश्वस्य भेषजभूतो देवानां दूतो भूत्वा ईयसे[1] ॥

[6]इमौ द्वौ वातौ वातः गच्छतः । एकः आसिन्धोः आसमुद्राद्वाति। एकः आपरावतः आस्वर्गात् । तयोरेको मम दक्षं प्रज्ञानं आवातु । अन्यः यत् रपः पापं तत् परावातु ॥

[7]हे वात! तव गृहे यददोऽमृतस्य निधिर्हितः ततोऽस्माकं जीवनं धेहि तत एव भेषजं च ॥

---

[1]ईयसे वाच्यसे? ।

हृदे प्रण आयूꣳषि तारिषत् । [9]इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुस्साश्वः । सह यन्मे अस्ति तेन । [10]भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवस्सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये । [11]अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातस्स्वस्त्या स्वस्तिमान्तया स्वस्त्या स्वस्ति-

---

[8]ततः नः अस्माकं महः तेज आवह वातो भेषजमावातु शम्भूः सुखस्य भावयिता मयोभूरपि सुखस्य भावयिता नो हृदे हृदयस्य अस्माकं आयूंषि प्रतारिषत् प्रतिरतु ॥

[9]त्वमिन्द्रस्य गृहोसि सगुः साश्वः । तं त्वां प्रपद्ये प्रविशामि । किं बहुना—यत् वस्तु मे अस्ति तेन सर्वेण सह ॥

[10]भूरादिं शरणं प्रपद्ये । अनार्ता अविनाशिनी देवता वाक् । अश्मानं विश्वव्यापिनं आखणं खननस्थानं प्रकृतिमित्यर्थः । प्रजापतेः स्रष्टुः ब्रह्मकोशं ब्रह्मणस्स्थानं ब्रह्म परमात्मानं प्रपद्ये । ओं प्रपद्ये ओङ्कारवाच्यं ब्रह्म प्रपद्ये ॥

[11]अन्तरिक्षं उरु विस्तिर्णावकाशः अग्नयः पर्वताश्च बृहन्तः अवकाशाः । यया स्वस्त्या अविनाशाय असानि स्वस्तिमान् भूयासम् ॥

मानसानि । [12]प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं [13]मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्रं इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ १० ॥ [14]द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तं नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत द्यौः । [15]कया नश्चित्र आ भुवदूती सदावृधस्सखा । क-

---

[12]प्राणापानाविति व्याख्यातम्* ॥

[13]अग्निः मयि मेधादिकं स्थापयतु । इन्द्रः सूर्यश्च ॥

[14]हे अश्विना! अश्विनौ! युवां द्युभिः दिवसैः अक्तुभिः रात्रिभिश्च सह अस्मान् परिपातं रक्षतं अरिष्टेभिः अहिंसकैः सौभगेभिः सौभाग्यैः । तं मित्रादयोऽपि मामहन्तां पूजयन्तु अनुमन्यन्ताम् ॥

[15]कया कः प्रजापतिः । 'सुपां सुलुक्' इति सोर्यादेशः । चित्रः चायनीयः सदावृधः सदा वर्धयिता सखा समानख्यानः अस्माकं सखा भूत्वा ऊती ऊत्या रक्षणेनास्मान् आ-

---

*आ. ७-१.

या शचिष्ठयाऽऽवृता। [16]कस्त्वा सत्यो मदानां मꣳ-
हिष्ठो मथ्सदन्धसः। दृढा चिदारुजे वसु। [17]अभी-
षुणस्सखीनामविता जरितृणाम्। शतं भवास्यू-
तिभिः। [18]वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋ-
षयो नाधमानाः। अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मु-
मुग्ध्यस्मान्निधयेऽवबद्धान्॥ ११॥ [19]शं नो देवी-
रभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रव-

---

भुवत् आभजतु पुनःपुनरवत्विति वा। किञ्च—कः शचि-
ष्ठया शक्ततमया आवृता क्रियया अस्मान् आभुवत्॥

[16]कः प्रजापतिः सत्यो नित्यः मदानां मदयितृणां मध्ये मंहि-
ष्ठः वृद्धतमः। महि वृद्धौ। अन्धसोऽन्नादपि त्वां मथ्सत्
मदयेत्। दृढाचित् दृढान्यप्यङ्गानि आरुजे आरुजत् सर्वतो
रुजति वसु वरिष्ठमिदमन्धः॥

[17]सखीनां समानख्यानानां अविता रक्षिता जरितृणां स्तो-
तृणां रक्षाकाले ऊतिभिरभितः सुष्ठु च शतं अनेको भवासि॥

[18]वयस्सुपर्णा इति॥ व्याख्यातम्*॥

[19]शन्नो देवीरिति॥ देवीः देव्यः देवनवत्यः आपः नः
अस्माकं अभिष्टये अभीष्टाय पीतये पानाय शम्भवन्तु।
किञ्च—अस्माकं शं च योश्च अभिस्रवन्तु॥

---

*ब्रा. २-५-८.

न्तु नः । [20]ईशा॑ना॒ वार्या॑णा॒ं क्षय॑न्तीश्चर्ष॒णीनाम् । अ॒पो या॑चामि भेष॒जम् । [21]सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु दु॒र्मि॒त्रास्तस्मै॑ भूयासु॒र्यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः । [22]आपो॒ हिष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से । [23]यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह न॑ः । उ॒श॒तीरि॑व मा॒तर॑ः । [24]त॒स्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ ॥ १२ ॥

---

[20]वार्याणां वरणीयानां ईशानाः चर्षणीनां मनुष्याणां क्षयन्तीः निवासभूताः अपो भेषजं याचामि ॥

[21]सुमित्रा न इति ॥ व्याख्यातम्* ॥

[22]आप इति ॥ हे आपः! यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ । ता यूयं ऊर्जे अन्नाय अन्नं दधातन दत्त । किमर्थं महे महते रणाय रमणीयाय चक्षसे दर्शनाय च ॥

[23]यो वश्शिवतमः शान्ततमो रसः तमिहास्मान् भाजयत उशतीः कामयमाना मातर इव ॥

[24]तस्मै रसाय अरं शीघ्रं पर्याप्तं वा गमाम गच्छेम । युष्मान्रसपानार्थं गच्छेम । हे आपः! यूयं यस्य निवासाय

---

*सं १-४-४५.

आपो॑ ज॒नय॑था च नः । [25]पृ॒थि॒वी शा॒न्ता साऽग्नि-
ना॑ शा॒न्ता सा मे॑ शा॒न्ता शुच॑ꣳ शमयतु । अ॒न्तरि॑-
क्षꣳ शा॒न्तं तद्वा॒युना॑ शा॒न्तं तन्मे॑ शा॒न्तꣳ शुच॑ꣳ
शमयतु । द्यौश्शा॒न्ता साऽऽदि॒त्येन॑ शा॒न्ता सा मे॑
शा॒न्ता शुच॑ꣳ शमयतु । [26]पृ॒थि॒वी शान्ति॑र॒न्तरि॑-
क्ष॒ꣳ शान्ति॒र्द्यौश्शान्ति॒र्दिश॒श्शान्ति॑रवान्तरदि॒शा-
श्शान्ति॑र॒ग्निश्शान्ति॑र्वा॒युश्शान्ति॑रादि॒त्यश्शान्ति॑श्च॒-
न्द्रमा॒श्शान्ति॒र्नक्ष॑त्राणि॒ शान्ति॒राप॒श्शान्ति॒रोष॑धय॒-
श्शान्ति॒र्वन॒स्पत॑य॒श्शान्ति॒र्गौश्शान्ति॑र॒जा शान्ति॒-
रश्व॒श्शान्ति॒ः पुरु॑ष॒श्शान्ति॒र्ब्रह्म॒ शान्ति॑र्ब्राह्म॒णश्शा-
न्ति॒श्शान्ति॑रे॒व शान्ति॒श्शान्ति॑र्मे अस्तु॒ शान्ति॑ः ।

---

जिन्वथ प्रीता भवथ तस्मै तं अरं तूर्णं गमाम । अस्माकं जनयथ च ॥

[25]पृथिवीति ॥ पृथिवी शान्ता निरुपद्रवा । सा अग्निना स्वामिना शान्ताऽभूत् सा शान्ता मम शुचं शोकं शमयतु । एवमन्येषु ॥

[26]पृथिव्यादयः शान्तिरूपा उपद्रवनिवृत्तिहेतवः । शान्तिरेव देवी स्वयं सर्वोपद्रवनिवृत्तिहेतुः । तस्मात् सैव मम शान्तिर्भूयात् ॥

[27]तयाऽहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे च-
तुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शा-
न्तिः। [28]एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा
श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा
माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा
सत्यं धर्मश्चैतानिं मा मा हासिषुः। [29]उदायुषा
स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदं-
स्थाममृताꣳ अनु। [30]तच्चक्षुर्देवहितं पुरस्ताच्छुक्र-

---

[27]सर्वशान्तिप्रदया तया शान्त्या अहं मह्यं द्विपदादि-भ्यः शान्तिं करोमि। सा शान्तिरेव सुखकरी भूयात्॥

[28]इह लोके श्र्यादीनि मामुत्तिष्ठन्तं कर्मसु प्रवर्तमानं अनूत्तिष्ठन्तु उपलक्ष्य ओत्तिष्ठन्तु समन्तादुत्तिष्ठन्तु। श्र्यादीनि कदाचिदपि मा मा हासिषुः मा त्यजेयुः॥

[29]उदायुषेति॥ उदायुषा उदस्थामिति सर्वत्र। आयुषा जीवनेन स्वायुषा पूर्णायुषा ओषधीनां रसेन पर्जन्यस्य शु-ष्मेण अमृतान् देवान् अनु उदस्थां उच्छ्रितोऽभवम्॥

[30]तच्चक्षुरिति॥ तच्चक्षुस्स्थानीयं देवहितं देवेन परमात्मना स्थापितं शुक्रं शुद्धं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उद्यत्ते-जः वयं शरदश्शतं शतसंवत्सरान् पश्येम तत्प्रसादात् अवि-

मुच्चरंत्। पश्येम शुरदंश्शुतं जीवेम शुरदंश्शुतं नन्दाम शुरदंश्शुतं मोदाम शुरदंश्शुतं भवाम शुरदंश्शुतꣳ शृणवाम शुरदंश्शतं प्रब्रंवाम शुरदंश्शुतमजींतास्स्याम शुरदंश्शुतं ज्योक्च सूर्यं दृशे । [31]य उदंगाम्महुतोऽर्णवाद्विभ्राजंमानस्सरिरस्य मध्यात्स मां वृषुभो लोहितुाक्षस्सूर्यो विपुश्चिन्मनंसा पुनातु। [32]ब्रह्मणुश्श्चोतंन्यसि ब्रह्मंण आणी स्थो ब्रह्मंण आव-

कलचक्षुषः स्याम । जीवेम प्राणान् धारयाम । **नन्दाम** समृद्धास्स्याम । **मोदाम** हृष्याम। **भवाम** भूतिमन्तस्स्याम। **शृणवाम** अविकलश्रोत्रा भवाम । **प्रब्रवाम** प्रवचनवन्तः स्याम। **अजीताः** अनभिभूतास्स्याम । **ज्योक्च शरदश्शतं** दीर्घमपि कालं **सूर्यं दृशे** । सूर्यं द्रष्टुं अजीतास्स्याम ॥

[31]**यो महतोऽर्णवात्** नित्यं **उदगात्** उद्गच्छति **सरिरस्य** अन्तरिक्षस्य **मध्यात्** मध्ये। 'सुपां सुलुक्' इत्यादिना आदादेशः। **विभ्राजमानः** विविधं दीप्यमानः । हेतौ शानच् । लोकं भ्राजयितुं **स** देवः **वृषभः** वर्षिता **लोहिताक्षः** अनन्तपुरुषः उच्यते पुण्डरीकाक्षः **विपश्चित्** सर्वज्ञः अन्तरात्मा भूत्वा स्वीरयतीति **सूर्यः** **मनसा** सानुग्रहेण **पुनातु** शोधयतु ॥

[32]**ब्रह्मण** इति ॥ शान्तिरुच्यते। हे शान्ते! **ब्रह्मणो** वेदस्य **श्चोतनी** त्वत्तो ब्रह्म श्चोतति क्षरति । **ब्रह्मणः आणी**

पंनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधि विस्रंसत् ।
[33] मेधामनीषे माऽऽविशताꣳ समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि ।
[34] आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठ-

---

धारणशङ्कुः* स्थः । वचनव्यत्ययः । आणिरसि । आवपनं आधारस्त्वमसि । इयं मही महती पृथिवी ब्रह्मणा धारिता । एनेन महदन्तरिक्षं धारितम् । एतत् ब्रह्म पृथिवीं विस्तीर्णां सदेवां देवसहितां दिवं दाधार धारयति । यदहं पदार्थजातं वेद अनुग्रहात् जानामि तदहं धारयाणि तस्याहं धारयिता भूयासम् । मत् मत्तो वेदो विस्मृतो मा भूत् ॥

[33] मेधा धारणशक्तिः मनीषा बुद्धिः ते समीची सङ्गते भूत्वा मा मां आविशताम् । भूतस्य भव्यस्य श्रेयसः अवरुद्ध्यै लाभाय सर्वमायुरयाणि प्राप्नुयाम । आदरार्था द्विरुक्तिः ॥

[34] आभिर्गीर्भिरिति ॥ व्याख्यातम्† ॥

---

*आधारशङ्कुः. † ब्रा. ३-७-११.

भाजो अधं ते स्याम । [35]ब्रह्म प्रावादिष्म तन्नो मा हांसीत् । ओं शान्तिश्शान्तिश्शान्तिः ॥ १३ ॥

परावतो दधातु बद्धाञ्जिन्वंथ दृशे सप्त चं ॥ ४२ ॥

नमो युञ्जते वृष्णो अश्वस्य ब्रह्मन्प्रवर्ग्येण ब्रह्मन्प्रचरिष्यामो दश प्राचीरपश्यं गोपां देवस्य समुद्रायेषे पींपिहि घर्म या ते महीनां चत्वार्यस्कान् या पुरस्तात्सप्त सप्त प्राणाय त्रीणि पूष्णे चत्वार्युदस्यैकादश यास्ते सप्ताग्निर्ध्रुवस्सीदैकान्न विंशतिर्भूरूर्ध्वस्त्रिंशद्रूर्मयि षोडश यास्ते घोरा नव स्त्रिकचाष्टौ धुनिश्च द्वे उग्रश्च त्रीण्यहोरात्रे पञ्च खड्गाणि विगास्सप्तदशासृन्मुखश्चत्वारि यदेतद्वृकसः पञ्च यदीषितश्चत्वारि दीर्घमुखि त्रीणीत्थाश्चत्वारि यदेतद्भूतानि षड्रसायं त्रीण्यत्रिणा दशाहरावद्य ब्र-

[35]ब्रह्मेति ॥ ब्रह्म वेदं प्रावादिष्म । 'आशंसायां भूतवच्च' इति लुङ् । प्रकर्षेण वदितुं समर्थाः स्याम । तत् अधीतं नो मा हासीत् मा त्यजतु । ततोऽस्माकं शान्तिरस्तु सर्वोपद्रवनिवृत्तिरस्तु । त्रिर्वचनं त्रैकालिकदोषशान्त्यर्थम् ॥

ह्मंणा षट्थू षडुत्तुंदाष्टौ भूष्षट्पृथिव्यंष्टषंष्टिश्शं नं-
स्सप्तपंञ्चाशद्द्विचंत्वारिꣳ शत् ॥ ४२ ॥

नमों वाचे ब्रह्मंन्प्रवर्ग्येंण मयि रुगन्तरिंक्षेण घ-
र्म या तें दिवि शुगस्कान्द्यौः पृंथिवीमुपं नो मित्रा-
वरुणा यदेतद्वृंकसो भूर्भुवस्सुवर्द्युभिस्त्रिणंवतिः ॥
१३ ॥

ओं नमोऽनुं मदन्तु ॥
ओं शान्तिश्शान्तिश्शान्तिः.
हरिः ओम् ॥ तथ्सत्.

---

इति श्रीभट्टभास्करमिश्रविरचिते प्रवर्ग्यमन्त्र-
प्रपाठकभाष्ये द्विचत्वारिंशोऽनुवाकः.
इति तैत्तिरीयारण्यके सप्तमप्रपाठकः
समाप्तः.

# अष्टमप्रपाठकः.



हरिः ओम् ॥ शं नस्तन्नो मा हासीत् ।
ओं शान्तिश्शान्तिश्शान्तिः ॥ ओ म् ॥

[1]देवा वै सत्रमासत । ऋद्धिपरिमितं यश-
स्कामाः । तेऽब्रुवन् । यं नः प्रथमं यश ऋ-
च्छात् । सर्वेषां नस्तथ्सहासदिति । तेषां कुरुक्षेत्रं
वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्ध आसीत् ।
तूर्घ्नमुत्तरार्धः । परीणज्जघनार्धः । मरव उत्करः ॥

---

[1]अथ प्रवर्ग्यस्य पुराकल्पः—देवा वा इत्यादि ॥ देवाः
पुरा सत्रमासत ऋद्धिपरिमितं कालं यावत्फलसिद्धिर्भवति ता-
वन्तं कालं यशस्कामाः वीर्यकामाः । ते अन्योन्यं अब्रुवन्
अस्माकं मध्ये यं प्रथमं यशः ऋच्छात् प्राप्नुयात् तदीयं
यशः सर्वेषां अस्माकं सत्रिणां सह भवेत् इति । तेषां
कुरुक्षेत्रं नाम पुण्यो देशः महावेदिरासीत् तस्या वेदेः दक्षि-
णपार्श्वं खाण्डवो देशोऽभवत् । तूर्घ्नो देश उत्तरपार्श्वमपरं पा-
र्श्वम् । परीणत् नाम देशः जघनार्धः । उत्करो मरवः
मरुदेशाः । तेषां मध्ये मखं यज्ञं वैष्णवं यशः विष्णोस्स्व-
भूतं वीर्यं आर्छत् प्रापत् ॥

१ ॥ तेषां मखं वैष्णवं यशं आर्छत् । [2]तन्नयंका-
मयत । तेनापाक्रामत् । तं देवा अन्वायन्न् । यशों-
ऽवरुरुंथ्समानाः । तस्यान्वागतस्य । सव्याद्धनु-
रजायत । दक्षिणादिषवः । तस्मादिषुधन्वं पु-
ण्यंजन्म । यज्ञजन्मा हि ॥ २ ॥ तमेकꣳ सन्तम् ।
बहवो नाभ्यंधृष्णुवन्न् । तस्मादेकमिषुधन्विनम् ।
बहवोंऽनिषुधन्वा नाभि धृंष्णुवन्ति । [3]सोंऽस्मयत ।
एकं मा सन्तं बहवो नाभ्यंधर्षिषुरिति । तस्यं
सिष्मियाणस्य तेजोऽपाक्रामत् । तद्देवा ओषधी-

---

[2]स मखः तत् यशो न्यकामयत चौर्येणात्मनि कर्तुमैच्छत् । तेन तस्माद्देशात् अपाक्रामत् अपक्रान्तः । तं अपक्रान्तं यशोऽवरुरुत्समानाः लब्धुकामा देवा अन्वायन् अन्वगच्छन् । तैः अन्वागतस्य तस्य सव्यात् धनुरजायत दक्षिणादिषवः जाताः । यज्ञजातत्वात् इषुधन्वं इषवश्च धनुश्च समाहारः । पुण्यजन्म पुण्योपादानम् । तं धन्वानं यज्ञं एकं असहायं सन्तं बहवो देवा नाभ्यधृष्णुवन् अभिभवितुं न समर्थास्स्युः । तस्मात् अद्यापि एकमिषुधन्विनं बहवः तद्रहिता न अभिभवन्ति ॥

[3]स यज्ञः अस्मयत दृप्तोऽभवत् । तस्य स्मयमानस्य तेजो वीर्यमपाक्रामत् । तत् वीर्यं न्यमृजुः अलिम्पन् । त-

नु न्यंमृजुः । ते श्यामाकां अभवन्न् । स्मयाका वै नामैते ॥ ३ ॥ तथ्स्मयाकानाꣳ स्मयाकत्वम् । तस्मांद्दीक्षितेनांपिगृह्यं स्मेतव्यंम् । तेजंसो धृत्यैं । स धनुंः प्रतिष्कभ्यांतिष्ठत् । ता उपदीकां अब्रुव-न्वरं वृणामहै । अथं व इमꣳ रेन्धयाम । यत्र क्वंच खनांम । तदपोऽभि तृंणदामेतिं । तस्मांदुपदीका यत्र क्वंच खनंन्ति । तदपोऽभि तृंन्दन्ति ॥ ४ ॥ वा-रें वृतꣳ ह्यांसाम् । तस्य ज्यामप्यांऽदन्न् । तस्य धनुंर्विप्रवंमाणꣳ शिर उदंवर्तयत् । तद्द्यावांपृ-

---

च्छिन्ना ओषधयः श्यामाकनामानः अभवन् । स्मयेन कृतत्वात् स्मयाकाः । अपिगृह्य मुखं संच्छाद्य किमर्थं? तेजसो धारणाय ॥

[4]प्रतिष्कभ्य भूम्यामवष्टभ्य उपदीकाः स्त्रियः हे देवाः! इमं वरं अस्माकं दत्त । अथ अनन्तरं युष्माकं इमं यज्ञं रन्धयाम । रन्ध पाके पीडयामः । वर उच्यते—यत्र क्वचन देशे समजले वा निर्जले वा खनाम तत्रापोऽभिमृष्यामेति । वारे व-रसम्बन्धिनि काले वृतं हि । ताः स्त्रियः तस्य ज्यां आऽभक्ष-यन् । विप्रवमाणं प्रवमानमुन्नम्यमानं तस्य यज्ञस्य शिरः उदवर्तयत् उद्वृत्तमकरोत् अच्छिनदित्यर्थः । तत् शिरो द्या-वापृथिवी अनुप्रावर्तत वेगातिरेकात् उभौ लोकावस्पृशत् । प्र-

थि॒वी अनु॒ प्रावर्तत । यत्प्रावर्तत । तत्प्र॒व॒र्ग्य॑स्य प्रवर्ग्य॒त्वम् । यद्घ्राँ ४ इत्यपतत् । तद्घ॒र्मस्य॑ घर्म॒त्वम् । म॒ह॒तो वी॒र्य॑मप॒प्त॒दिति॑ । तन्म॑हावी॒रस्य॑ महावीर॒त्वम् ॥ ५ ॥ यद॒स्यास्स॒मभ॑रन्न् । तथ्स॒म्राज्ञ॑स्सम्रा॒ट्त्वम् । [5]तꣳ स्तृ॒तं दे॒वता॒स्त्रेधा व्य॑गृह्णत । अ॒ग्निः प्रा॑तस्स॒व॒नम् । इन्द्रो॒ माध्य॑न्दिन॒ꣳ सव॑नम् । विश्वे॑ दे॒वास्तृ॑तीयसव॒नम् । तेनाप॑शी॒र्ष्णा य॒ज्ञेन॒ यज॑मानाः । नाशिषो॒ऽवारु॑न्धत । न सु॒व॒र्गं लो॒कम॒भ्य॑जयन्न् । [6]ते दे॒वा अ॒श्विना॑वब्रुवन्न् ॥

---

वर्तनात् प्रवर्ग्यः वर्णव्यत्ययः । घ्राँ इति एवंरूपं शब्दं कुर्वत् अपतत् । घृशब्दात् घर्मः । महतो यज्ञस्य वीर्यमपतदिति महावीरः । अस्या भूमेः संभृतवन्तः मृत्खननादिरूपेण सम्भारेण । भकारलोपात् सम्राट् ॥

[5]तं स्तृतं हिंसितं यज्ञं देवास्त्रेधा विगृहीतवन्तः । तान् त्रीन् भागानग्न्यादयोऽगृह्णन् । अपशीर्ष्णा विशिरस्केन यज्ञेन यजन्तः आशिषः अङ्गफलानि । प्रधानफलं स्वर्गः ॥

[6]शिरससन्धानार्थं अश्विनावब्रुवन् युवां भिषजौ स्थः खलु यज्ञस्य छिन्नं इदं शिरः प्रतिधत्तं यथापूर्वं स्थापयतम् ।

ह ॥ भिषजौ वै स्थः । इदं यज्ञस्य शिरः प्रतिध-
त्तमिति । तावब्रूताम् वरं वृणावहै । ग्रहं एव नाव-
त्रापि गृह्यतामिति । ताभ्यामेतमाश्विनमगृह्णन् ।
तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । यत्प्रवर्ग्यः । तेन
सशीर्ष्णा यज्ञेन यजमानाः । अवाशिषोऽरुन्धत ।
अभि सुवर्गं लोकमजयन् । यत्प्रवर्ग्यं प्रवृणक्ति ।
यज्ञस्यैव तच्छिरः प्रतिदधाति । तेन सशीर्ष्णा य-
ज्ञेन यजमानः । अवाशिषो रुन्धे । अभि सुवर्गं
लोकं जयति । तस्मादेष आश्विनप्रवया इव ।
यत्प्रवर्ग्यः ॥ ७ ॥

उत्करो ह्येते तृन्दन्ति महावीरत्वमब्रुवन्न-
जयन्थ्सप्त च ॥ १ ॥

---

तौ ऊचतुः वचनं अत्र यज्ञे आवयोः सोमग्रहो गृह्यतामिति ।
तदा आश्विनं प्रसिद्धम् । यदेतत्प्रवर्ग्य इत्युक्तं तत् यज्ञस्य
शिरोऽस्थापयताम् । तस्मान् सशिरस्केन यज्ञेन प्रवर्ग्यवता यज्ञेन
यजन्त आशिषः स्वर्गं चावारुन्धत । तस्माद्यजमानोपि स-
प्रवर्ग्येण यज्ञेन यजेतेति विधिः । आशिषं स्वर्गं च जयति।
तस्मात् कारणात् एष प्रवर्ग्यः आश्विनप्रधान इव भवति
आश्विनभूयिष्ठ इव भवति अश्विभ्यां संहितत्वात् ॥

इत्यष्टमप्रपाठके प्रथमोऽनुवाकः.

[1]सावित्रं जुहोति प्रसूत्यै। चतुर्गृहीतेन जुहोति। चतुष्पादः पशवः। पशूनेवाव रुन्धे। चतस्रो दिशः। दिक्ष्वेव प्रति तिष्ठति। छन्दाꣳसि देवेभ्योऽपाक्रामन्। न वोऽभागानि हव्यं वक्ष्याम इति। तेभ्य एतच्चतुर्गृहीतमधारयन्। पुरोनुवाक्यायै याज्यायै ॥ ८ ॥ देवतायै वषट्काराय। यच्चतुर्गृहीतं जुहोति। छन्दाꣳस्येव तत्प्रीणाति। तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति। [2]ब्रह्मवादिनो वदन्ति। होतव्यं दीक्षितस्य गृहा ३ इ न होतव्या३मिति।

---

[1]सावित्रमित्यादि[1] ॥ सवितुः प्रसूत्यै अनुज्ञानार्थम्। चतुर्गृहीतेनेति विधिः। चतस्रो महादिशः। छन्दांसीत्यादि चतुर्गृहीतस्यार्थवादः। गायत्र्यादीनि मन्त्रगतानि छन्दांसि देवेभ्यः अपगतानि युष्माकं वयं अभागानि सन्ति न हव्यं वक्ष्याम इत्युक्त्वा। ततस्ते देवाः तेभ्यः छन्दोभ्यः चतुर्गृहीतं निश्चितवन्तः[2] पुरोनुवाक्यादिभ्यः एकमेकमिति। यच्चतुर्गृहीतमिति। गतम् ॥

[2]दीक्षाहस्सु महावीरकरणे सावित्रं प्रति संशयाना वेदवादिन आहुः—दीक्षितस्य गृहे अग्निहोत्रे यत्किंचिद्धोतव्यं न वेति।

---

[1]सावित्रमिति विधिः.

हविर्वै दीक्षितः । यज्जुहुयात् । हविष्कृतं यजमानमग्नौ प्रदध्यात् । यन्न जुहुयात् ॥ १ ॥ यज्ञपरुरन्तरियात् । यजुरेव वदेत् । न हविष्कृतं यजमानमग्नौ प्रदधाति । न यज्ञपरुरन्तरेति । [3]गायत्री छन्दाꣳस्यत्यमन्यत । तस्यै वषट्कारोऽभ्यद्रुत्य शिरोऽच्छिनत् । तस्यै द्वेधा रसः पराऽपतत् । पृथिवी-

'विचार्यमाणानाम्' इति प्लुतः । हविर्वै दीक्षितः हविरन्तरोत्पत्तेः प्राक् स्वयमेव हविर्भूतस्तिष्ठति । तथा च श्रूयते—'पुरा खलु वावैष मेधायात्मानमारभ्य चरति यो दीक्षितः'* इति । तस्मात् यदि जुहुयात् हविस्सामान्यादनुपूर्वहोमे[1] यजमानमेव अग्नौ प्रदधाति । न जुहोति चेत् यज्ञपरुः 'सावित्रं जुहोति'† इत्युक्तं यज्ञपर्वान्तरितं कुर्यात् । तस्मात् यजुरेव मन्त्रमेव वदेत् न होमः । एवं कृते उभयरूपो दोषः शाम्यति ॥

[3]अश्विभ्रवृक्षार्थवादः—गायत्री अन्यानि छन्दांसि प्रकृत्यात्मानं महान्तं मेने । तस्या गायत्र्याः शिरः वषट्कारः अभ्येत्य अच्छिनत् । छिन्नशिरस्काया रसः सारं द्विधा परापतत् अर्ध एकोंऽशः पृथिवीं प्राप्तः खदिरोऽभवत् । पशुप्रविष्टोऽन्यः अजाऽभवत् । विभक्तिव्यत्ययः । यत्स्वादिर्यश्विभ्ररिति तस्मात् छन्दसां रसेन यज्ञस्य शिरः महावीरं सम्भरति । यदि औ-

* स. ६-१-११. † आ. ८-२ [1]न्यादपूर्वहोमः.

मर्धः प्राविंशत् । पशूनर्धः । यः पृथिवीं प्राविंशत् ॥
१० ॥ स खदिरोऽभवत् । यः पशून् । सोऽजाम् ।
यत्खादिर्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य
शिरस्सम्भरति । यदौदुम्बरी । ऊर्ग्वा उदुम्बरः । ऊर्जै-
व यज्ञस्य शिरस्संभरति । यद्वैणवी । तेजो वै वेणुः ॥
११ ॥ तेजसैव यज्ञस्य शिरस्सम्भरति । यद्वैकङ्कती ।
भा एवावरुन्धे । [4]देवस्य त्वा सवितुः प्रसव इत्य-
भ्रिमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अ-
श्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ता-
भ्यामित्याह यत्यै । वज्र इव वा एषा । यदभ्रिः ।
अभ्रिरसि नारिरसीत्याह शान्त्यै ॥ १२ ॥ अध्व-
रकृद्देवेभ्य इत्याह । यज्ञो वा अध्वरः । यज्ञकृद्दे-

---

दुम्बरी ऊर्क् अन्नं उदुम्बरः 'देवा वा ऊर्जं व्यभजन्त'* इत्युक्तं अन्नेनैव सम्भरति । 'स वेणुं प्राविशत्'† इत्युक्तत्वात् तेजो वै वेणुः । 'अग्नेस्सृष्टस्य यतः । विकङ्कतं भा आर्छत्'* इत्युक्तत्वात् वैकङ्कती चेत् भाः दीप्तीः एवावरुन्धे ॥

[4]देवस्येत्यादि ॥ प्रसूत्यै सवितुरनुज्ञानार्थम् । पुरा देवानां अश्विनौ अध्वर्यू आस्ताम् । यत्यै प्रयत्नार्थम् । वज्र इव तीक्ष्णाग्रत्वात् । नराणां हितेत्याह यज्ञस्य शान्त्यै । यज्ञो

---

*ब्रा. १-१-३. †सं. ५-१-१.

त्रेभ्य इति वावैतदाह । उत्तिष्ठ ब्रह्मणस्पत इत्याह। ब्रह्मणैव यज्ञस्य शिरोऽच्छैति । प्रैतु ब्रह्मणस्पतिरित्याह । प्रेत्यैव यज्ञस्य शिरोऽच्छैति । प्रदेव्येतु सूनृतेत्याह । यज्ञो वै सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसमित्याह ॥ १३ ॥ पाङ्क्तो हि यज्ञः । देवा यज्ञं नयन्तु न इत्याह । देवानेव यज्ञनियः कुरुते। देवी द्यावापृथिवी अनु मे मꣳसाथामित्याह । आभ्यामेवानुमतो यज्ञस्य शिरस्सम्भरति । ऋध्यासमद्य मखस्य शिर इत्याह । यज्ञो वै मखः । ऋध्यासमद्य यज्ञस्य शिर इति वावैतदाह। मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह । निर्दिश्यैवैनद्धरति ॥ १४ ॥ त्रिर् हरति । त्रय इमे लो-

---

हि अध्वरः अहिंस्यः । मृत्खननसाधनत्वात् यज्ञकृत् । ब्रह्मणा परमात्मना सहायभूतेन महावीरं प्रतिगच्छति । ब्रह्मणा सह प्रेत्य गत्वा । यज्ञो वै सूनृता मन्त्रात्मिका वाक्। पाङ्क्तः हविष्पङ्क्त्यादिरूपेण यज्ञः पाङ्क्तः । यज्ञनायकान् देवानेव करोति नात्मानम् । आभ्यां द्यावापृथिवीभ्यामेवानुज्ञातः । अद्य यज्ञशिरः प्रति ऋद्धो भूयासमित्येवाह । एतदहः निर्दिश्य यज्ञस्यैव तन्नान्यार्थमित्युक्त्वा हरति ॥

काः। एभ्य एव लोकेभ्यो यज्ञस्य शिरस्सम्भरति।
तूष्णीं चतुर्थꣳ हरति। अपरिमितादेव यज्ञस्य शि-
रस्संभरति। मृत्खनादग्रे हरति। तस्मान्मृत्खनः क-
रुण्यतमः। इयत्यग्र आसीरित्याह। अस्यामेवाछं-
म्बट्कारं यज्ञस्य शिरस्सम्भरति। ऊर्जं वा एतꣳ रसं
पृथिव्या उपदीका उद्दिहन्ति ॥१५॥ यद्वल्मीकम्।
यद्वल्मीकवपा संभारो भवति। ऊर्जमेव रसं पृ-
थिव्या अवरुन्धे। अथो श्रोत्रमेव। श्रोत्रꣳ ह्येत-
त्पृथिव्याः। यद्वल्मीकः। अबधिरो भवति। य
एवं वेद। [6]इन्द्रो वृत्राय वज्रमुदयच्छत्। स यत्र-

[5]त्रिर्हरणात् लोकत्रयात्मानं सम्भरति। तूष्णीं चतुर्थं अ-
परिमितात् ब्रह्मणः। मृत्खनात्। प्रथमं खाता भूमिः मृ-
त्खनः करुण्यतमः कर्मण्यः श्रेष्ठः। अस्यां भूम्यां एव
अछम्बट्कारं सत्यङ्कारं वराहविहतत्वात्। एता उपदीकाः
स्त्रियः पृथिव्याः ऊर्जं बलवद्रसं उद्दिहन्ति ऊर्ध्वं गमयन्ति
यत् एतत् वल्मीकम्। वल्मीकवपा सम्भारो भवतीति यत्
पृथिव्या बलवत् रसं लभते। अथो श्रोत्रमेव अथो अपि
च श्रोत्रमिन्द्रियं लभते। तस्मात् वल्मीकः पृथिव्याः श्रोत्रं
छिद्ररूपत्वात्। य एवं विद्वान् सः अबधिरो भवति ॥

यत्र प॒राक्र॑मत ॥ १६ ॥ तन्नाध्रि॑यत । स पू॑तीक-
स्त॒म्बे परा॑क्रमत । सो॑ऽध्रियत । सो॑ऽब्रवीत् । ऊ॒-
तिं॑ वै मे॑ऽधा॒ इति॑ । तदू॒तीका॑नामूती॑क॒त्वम् । यदू॒-
तीका॒ भव॑न्ति । य॒ज्ञायै॒वोति॑ं द॑धाति । अ॒ग्नि॒जा
अ॑सि प्र॒जाप॑ते॒ रेत॒ इत्या॑ह । य ए॒व रसः॑ प॒शून्प्रा-
वि॑शत् ॥ १७ ॥ तमे॒वाव॑रुन्धे । पश्चै॒ते सं॑भा॒रा भ॑-
वन्ति । पाङ्क्तो॑ य॒ज्ञः । यावा॑ने॒व य॒ज्ञः । तस्य॒ शि-
र॒स्सम्भ॑रति । यद्ग्रा॒म्याणां॑ प॒शूनां॑ चर्म॑णा स॒म्भ-

[6]ऊतीकस्तम्बविधिः—वृत्राय वृत्रनाशाय वज्रमुदयच्छत् । स
इन्द्रः यत्रयत्र स्थित्वा पराक्रममकरोत् तत्रतत्र नाध्रियत धृतिं
नाविन्दत् । स पूतीकस्तम्बे स्थित्वा पराक्रमत । स धृति-
मविन्दत् । हे पूतीक ! मे ऊतिं रक्षणं अधाः अददः ।
ऊतिशब्दोक्त्या पूतीका ऊतीका इत्युच्यन्ते । एतेन यज्ञाय
रक्षणं दधाति[1] ॥

[7]पशुप्रविष्टं रसं लभते । पश्चैते मृत्खननवराहविहतवल्मीकवपो-
पूतीकस्तम्बाजापयांसि । पाङ्क्तो यज्ञ इत्यादि गतम् ॥

[8]यदि ग्राम्याणां गवादीनां शुचा शोकेन छिन्नशिरस्समुत्थेन
अर्पयेत् संयोजयेत् । आरण्यान् ढिखुरादीन् एव । त-

[1]दधाति पशूनर्थ इत्युक्तम् ।

रेत् । ग्राम्यान्पशूञ्छुचाऽर्पयेत् । कृष्णाजिनेन स-म्भरति । आरण्यानेव पशूञ्छुचाऽर्पयति । तस्मा-थ्समावत्पशूनां प्रजायमानानाम् ॥ १८ ॥ आर-ण्याः पशवः कनीयाꣳसः । शुचा ह्यृताः । लोम-तस्सम्भरति । अतो ह्यस्य मेध्यम् । परिगृह्याय-न्ति । रक्षसामपहत्यै । बहवो हरन्ति । अपचिति-मेवास्मिन्दधाति । उद्धते सिकतोपोप्ते परिश्रिते निदधाति शान्त्यै । [1]मदन्तीभिरुपसृजति ॥ १९ ॥ तेज एवास्मिन्दधाति । मधु त्वा मधुला करोत्वि-त्याह । ब्रह्मणैवास्मिन्तेजो दधाति । यद्ग्राम्याणां

---

स्मात् कारणात् समावत् सममेव प्रजायमानानां पशूनां मध्ये आरण्याः कनीयांसः अल्पतराः शुचा शोकेन ऋताः गताः प्राप्ताः हि । लोमतः रोमशप्रदेशे सम्भरति । अस्य कृष्णाजिनस्य अतः अयं प्रदेशो मेध्यं यज्ञार्हं संभृतं प्रवर्ग्यं परितो गृहीत्वाऽऽयन्ति रक्षसां अपहननाय । बहवः अपचितिं पूजाम् । उद्धते स्फयादिना सिकतोपोप्ते परिश्रिते खरे निदधाति शान्त्यर्थम् ॥

[1]मदन्तीभिः उष्णाभिः अद्भिः उपसृजति सम्भारान् संसृजति । उष्णत्वात् तेजः ब्रह्मणा रसात्मकेन परमात्मना ग्रा-

पात्राणां कपालैस्सꣳ सृजेत् । ग्राम्याणि पात्राणि शुचाऽर्पयेत् । अर्मकपालैस्सꣳ सृंजति । एतानि वा अनुपजीवनीयानि । तान्येव शुचाऽर्पयति । शर्कराभिस्सꣳसृंजति धृत्यै । अथो शन्त्वाय । अजलोमैस्सꣳ सृंजति । एषा वा अग्नेः प्रिया तनूः । यदजा । प्रिययैवैनं तनुवा सꣳ सृंजति । अथो तेजसा । कृष्णाजिनस्य लोमभिस्सꣳ सृंजति । यज्ञो वै कृष्णाजिनम् । यज्ञेनैव यज्ञꣳ सꣳ सृंजति ॥ २० ॥

याज्यायै न जुहुयादविंशद्वेणुश्शान्त्यै पङ्क्तिराधसमित्याह हरति दिहन्ति पराक्रमता-विंशत्प्रजायमानानाꣳ सृजति शन्त्वा-याष्टौ च ॥ २ ॥

म्याणां पात्राणां कपालैः । तान् शोकेन । संसृजति अर्मकपालैः । धृत्यै धारणार्थं शन्त्वाय शंकरत्वाच्छान्तत्वाय । अग्नेः प्रिया तनूः शरीरं अजा सहोत्पन्नत्वात् । तेजसा अग्निजत्वात् । यज्ञो वै कृष्णाजिनं यतः यज्ञो देवेभ्यः कृष्णो भूत्वा निराछैत्[1] । ऋक्सामरूपत्वाच्च । यज्ञं यज्ञशिरः ॥

इति द्वितीयोऽनुवाकः.

[1] ‘यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा’ (ब्रा. ३-२-५,६.) इत्युक्तत्वात् इति माधवीयम् ।

[1]परिश्रिते करोति । ब्रह्मवर्चसस्य परिगृहीत्यै । न कुर्वन्नभि प्राण्यात् । यत्कुर्वन्नभि प्राण्यात् । प्राणाञ्छुचाऽर्पयेत् । अपहाय प्राणिति । प्राणानां गोपीथाय । न प्रवर्ग्यं चादित्यं चान्तरेयात् । यदन्तरेयात् । दुश्चर्मा स्यात् ॥२१॥ तस्मान्नान्तराऽऽयम् । आत्मनो गोपीथाय । वेणुना करोति । तेजो वै वेणुः । तेजः प्रवर्ग्यः । तेजसैव तेजस्समर्धयति । मखस्य शिरोसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्प्रवर्ग्यः ॥ २२ ॥ तस्मादेवमाह । यज्ञस्य पदे स्थ इत्याह । यज्ञस्य ह्येते पदे । अथो प्रतिष्ठित्यै । गायत्रेण त्वा छन्दसा करोमीत्याह । छन्दोभिरेवैनं करोति । त्र्युद्धिं करोति । त्रय इमे

---

[1]परिश्रिते देशे महावीरं करोति ब्रह्मवर्चसस्य परिग्रहार्थम् । महावीरं कुर्वाणस्तं न अभ्युच्छ्वसेत् । तत्संसर्गात् स्वीयान् प्राणान् शोकेन संयोजयति । तस्मात् अपहाय अन्यत्र प्राणिति गोपीथाय रक्षणार्थम् । प्रवर्ग्यसाधनादित्ययोः अन्तरा मध्ये न गच्छेत् । यदि अन्तरा गच्छेत् द्वयोस्तेजसोः दहनात् दुश्चर्मा कुष्ठी भवति । तस्मात् अन्तरा न गन्तव्यम् । वेणुना वेणुकाण्डेन करोति । प्रवर्ग्यस्य आदित्यात्मकत्वात् तेजः । तेजसा तेजः समृद्धं करोति । महावीरं यज्ञशिर-

लोकाः । एषां लोकानामाप्त्यै । छन्दोभिः करोति ॥ २३ ॥ वीर्यं वै छन्दाꣳसि । वीर्येणैवैनं करोति । [2]यजुषा बिलं करोति व्यावृत्त्यै । इयन्तं करोति । प्रजापतिना यज्ञमुखेन संमितम् । इयन्तं करोति । यज्ञपरुषा संमितम् । इयन्तं करोति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमितम् ॥ २४ ॥ अपरिमितं करोति । अपरिमितस्यावरुद्ध्यै । परिग्रीवं करोति धृत्यै । सूर्यस्य हरसा श्रायेत्याह । यथायजुरेवैतत् । अश्वशकेन धूपयति । प्राजापत्यो वा अश्वः सयोनित्वाय । वृष्णो अश्वस्य निष्पदसीत्याह । असौ वा आदित्यो वृषाऽश्वः । तस्य छन्दाꣳसि निष्पत् ॥ २५ ॥ छन्दोभिरेवैनं

---

स्त्वात् मखस्य शिरोसीति ब्रूयात् । एते अङ्गुष्ठे यज्ञस्य पदे स्थाने द्वित्वात् प्रतिष्ठार्थं च । छन्दोभिरेव नात्मना । त्रिःप्रदानं त्रिःकरणं व्युद्धिः । वीर्यं [वीर्यप्रदं] छन्दः वीर्यम् ॥

[2]यजुषा बिलं व्यावृत्त्यर्थं लौकिकवैदिकयोः । इयन्तं प्रादेशमात्रम् । यज्ञसाधनानां समिदादीनां प्रमाणत्वात् यज्ञपरुषा संमितम् । यद्वा यज्ञशिरः प्रादेशमात्रं परुः । एतावत् मुखसम्मितं वीर्यम् । अपरिमितं परिमाणरहितम् । परिग्रीवं प-

धूपयति । अर्चिषे त्वा शोचिषे त्वेत्याह । तेज एवास्मिन्दधाति । वारुणोऽभीद्धः । मैत्रियोपैति शान्त्यै । सिद्ध्यै त्वेत्याह । यथायजुरेवैतत् । देवस्त्वा सवितोद्वपत्वित्याह । सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरुद्वपति । अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह ॥ २६ ॥ तस्मादग्निस्सर्वा दिशोऽनु विभाति । [3]उत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै । ईश्वरो वा एषोऽन्धो भवितोः । यः प्रवर्ग्यमन्वीक्षते । सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्याह । चक्षुषो गोपीथाय । ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह । इयं वा ऋजुः । अन्तरिक्षꣳ साधु । असौ सुक्षितिः ॥ २७ ॥ दिशो भूतिः । इमानेवास्मै लोकान्कल्पयति । अथो प्रतिष्ठित्यै । इदमहममुमा-

रितो ग्रीवाकारं मध्ये लग्नमिति यावत् । धृत्यै धारणार्थम् । अश्वशकेन अश्वशकृता । निष्पत् निष्पन्नम् । अभीद्धः दीप्तः । ब्रह्मणा परमात्मना देवताभिश्च । आशा दिश आपृणेत्युक्तः अग्निः सर्वतो विभाति ॥

[3]सूर्यस्य चक्षुषा दर्शनात् चक्षुः रक्षितं भवति । विशेति

मुष्यायुणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्या-
ह । विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति । विशे-
ति राजन्यस्य ब्रूयात् । विशैवैनं पर्यूहति । पशु-
भिरिति वैश्यस्य । पशुभिरेवैनं पर्यूहति । असुर्यं
पात्रमनाच्छृण्णम् ॥ २८ ॥ आच्छृणत्ति । देवत्राऽ-
कः । अजक्षीरेणाच्छृणत्ति । परमं वा एतत्पयः ।
यदजक्षीरम् । परमेणैवैनं पयसाऽऽच्छृणत्ति । य-
जुषा व्यावृत्त्यै । छन्दोभिराच्छृणत्ति । छन्दोभिर्वा
एष क्रियते । छन्दोभिरेव छन्दाꣳस्याच्छृणत्ति ।
छृन्धि वाचमित्याह । वाचमेवावरुन्धे । छृन्ध्यूर्ज-
मित्याह । ऊर्जमेवावरुन्धे । छृन्धि हविरित्याह ।
हविरेवाकः । देवपुरश्चरसध्यासं त्वेत्याह । यथाय-
जुरेवैतत् ॥ २९ ॥

स्याद्यत्प्रवर्ग्यंश्छन्दोभिः करोति वीर्यसंमितं
छन्दाꣳसि निष्पत्पृणेत्याह सुक्षिति-
रनाच्छृण्णं छन्दाꣳस्याच्छृणत्त्यष्टौ च ॥३॥

---

राजन्यस्येति विकल्पः । असुर्यं असुरदेवत्यं अनाच्छृण्णं अ-
नक्तं देवत्रा देवयोग्यं अकः करोति । परमं आग्नेयत्वात् ॥

इति तृतीयोऽनुवाकः.

[1]ब्रह्म॒न्प्रच॑रिष्याम॒ो होत॑र्घ॒र्मम॒भिष्टु॒हीत्या॑ह । ए॒ष वा ए॒तर्हि॒ बृह॒स्पति॑ः । यद्ब्र॒ह्मा । तस्मा॑ ए॒व प्र॑ति॒प्रोच्य॒ प्रच॑रति । आ॒त्मनोऽना॑र्त्यै । य॒माय॑ त्वा म॒खाय॒ त्वेत्या॑ह । ए॒ता वा ए॒तस्य॑ दे॒वता॑ः । ता॒भिरे॒वैन॒ꣳ सम॑र्धयति । मद॑न्तीभि॒ः प्रोक्ष॑ति । तेज॑ ए॒वास्मि॑न्दधाति ॥ ३० ॥ [2]अ॒भिपू॒र्वं प्रोक्ष॑ति । अ॒भि॒पू॒र्वमे॒वास्मि॒न्तेजो॑ दधाति । त्रिः प्रोक्ष॑ति । त्र्या॑वृ॒द्धि य॒ज्ञः । अथो॑ मेध्य॒त्वाय॑ । होताऽन्वा॑ह । रक्ष॑सा॒मप॑हत्यै । अन॑वानम् । प्रा॒णाना॒ꣳ सन्त॑त्यै । [3]त्रि॒ष्टुभ॑स्स॒तीर्गा॑य॒त्रीरि॒वान्वा॑ह ॥ ३१ ॥ गा॒य॒त्रो हि प्रा॒णः । प्रा॒णमे॒व यज॑माने दधाति । सन्त॑त॒मन्वा॑ह । प्रा॒णाना॑म॒न्नाद्य॑स्य॒ सन्त॑त्यै । अथो॒ रक्ष॑सा॒मप॑हत्यै । यत्परि॑मिता अनुब्रू॒यात् । परि॑मित॒मव॑रुन्धीत । अप॑रिमिता॒ अन्वा॑ह । अप॑रिमित॒स्याव॑रुद्ध्यै । शिरो॒ वा ए॒तद्य॒ज्ञस्य॑ ॥ ३२ ॥ यत्प्रव॒-

[1]ब्रह्मण एव निवेदयित्वा प्रचरति ॥

[2]अभिपूर्वं सादनक्रमेण । अनवानं अनुच्छ्वसन् ॥

[3]त्रिष्टुभस्सतीरित्यादिविकल्पः । सन्ततमिति तस्यैव ॥

र्ग्यः । ऊर्ग्मुञ्जाः । यन्मौञ्जो वेदो भवति । ऊर्जैव यज्ञस्य शिरस्समर्धयति । प्राणाहुतीर्जुहोति । प्राणानेव यजमाने दधाति । सप्त जुहोति । सप्त वै शीर्षण्याः प्राणाः । प्राणानेवास्मिन्दधाति । [4]देवस्त्वा सविता मध्वाऽनक्त्वित्याह ॥ ३३ ॥ तेजसैवेनमनक्ति । पृथिवी तपसस्त्रायस्वेति हिरण्यमुपास्यति । अस्या अनतिदाहाय । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । अग्निस्सर्वा देवताः । [5]प्रलवानादीप्योपास्यति । देवतास्वेव यज्ञस्य शिरः प्रति दधाति । अप्रतिशीर्णाग्रं भवति । एतद्वै रूहिर्ह्यैषः ॥ ३४ ॥ अर्चिरसि शोचिरसीत्याह । तेज एवास्मिन्ब्रह्मवर्चसं दधाति । सꣳ सीदस्व महाꣳ असीत्याह । महान् ह्येषः । [6]ब्रह्मवादिनो वदन्ति । एते वाव त ऋत्विजः । ये दर्शपूर्णमासयोः । अथ कथा होता यजमानायाशिषो नाशास्त इति ।

---

[4]मध्वा आज्येन । तद्धि तेजः ॥

[5]प्रलवान् छिन्नान् मुञ्जान् उपास्यति महावीरस्याधस्तात् क्षिपति ॥

पुरस्तादाशीः खलु वा अन्यो यज्ञः । उपरिष्टादाशीरन्यः ॥ ३५ ॥ अनाधृष्या पुरस्तादिति यदेतानि यजूꣳष्याह । शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे । आयुः पुरस्तादाह । प्रजां दक्षिणतः । प्राणं पश्चात् । श्रोत्रमुत्तरतः । विधृतिमुपरिष्टात् । प्राणानेवास्मै समीचो दधाति । [7]ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनु व्यास्थापयन्ति ॥ ३६ ॥ मनोरश्वाऽसि भूरिपुत्रेतीमामभिमृशति । इयं वै मनोरश्वा भूरिपुत्रा । अस्यामेव प्रतितिष्ठत्यनुन्मादाय । सूपसदा मे भूया मा मा हिꣳसीरित्याहाहिꣳसायै । चितस्स्थ परिचित इत्याह । अपचितिमेवास्मिन्दधाति । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः । तस्य मरुतो रश्मयः ॥३७

---

[6]यजमानस्याशीःकामाः अन्ये ऋत्विजो न सन्ति । पुरस्तादाशीः प्रवर्ग्यादिः । उपरिष्टादाशीः दर्शपूर्णमासादिः । शीर्षतः मुखतः ॥

[7]दिशोऽनुभ्रमितुं समर्थः ॥

स्वाहा मरुद्भिः परिश्रयस्वेत्याह । अमुमेवादित्यꣳ रश्मिभिः पर्यूहति । तस्मादसावादित्योऽमुष्मिन्लोके रश्मिभिः पर्यूढः । [8]तस्माद्राजा विशा पर्यूढः । तस्माद्ब्राह्मणीस्संजातैः पर्यूढः । अग्नेस्सृष्टस्य यतः । विकङ्कतं भा आर्छत् । यद्वैकङ्कताः परिधयो भवन्ति । भा एवावरुन्धे । द्वादश भवन्ति॥ ३८ ॥ द्वादश मासास्संवथ्सरः । संवथ्सरमेवावरुन्धे । अस्ति त्रयोदशो मास इत्याहुः । यत्त्रयोदशः परिधिर्भवति । तेनैव त्रयोदशं मासमवरुन्धे । [9]अन्तरिक्षस्यान्तर्धिरसीत्याह व्यावृत्त्यै । दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधि निदधाति । अमुष्या अनतिदाहाय । अथो आभ्यामेवैनमुभयतः परिगृह्णाति । अर्हन्बिभर्षि सायकानि धन्वेत्याह ॥ ३९ ॥ स्तौत्येवैनमेतत् । गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते । छन्दोभिरेवैनान्यादत्ते । मधुमध्विति धूनोति । प्राणो वै म-

---

[8]राजा ऐश्वर्येण सजातैः ज्ञातिभिः पर्यूढः परिहितः ॥

[9]द्यावापृथिवीव्यावृत्त्यर्थम् ॥

धुं । प्राणमेव यजमाने दधाति । त्रिः परियन्ति । त्रिवृद्धि प्राणः । त्रिः परियन्ति । [10]त्र्यावृद्धि यज्ञः ॥ ४० ॥ अथो रक्षसामपहत्यै । त्रिः पुनः परियन्ति । षट्थ् संपद्यन्ते । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठन्ति । यो वै घर्मस्य प्रियां तनुवमाक्रामति । दुश्चर्मा वै स भवति । एष ह वा अस्य प्रियां तनुवमाक्रामति । यस्त्रिः परीत्य चतुर्थं पर्येति । [11]एताꣳ ह वा अस्योग्रदेवो राजनिराचक्राम ॥ ४१ ॥ ततो वै स दुश्चर्माऽभवत् । तस्मात्त्रिः परीत्य न चतुर्थं परीयात् । आत्मनो गोपीथाय । प्राणा वै धवित्राणि । [12]अव्यतिषङ्गं धून्वन्ति । प्राणानामव्यतिषङ्गाय क्लृप्त्यै । [13]विनिषद्य धून्वन्ति । दिक्ष्वेव प्रतितिष्ठन्ति । ऊर्ध्वं धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै । स-

[10]त्र्यावृत् त्रित्वभूयिष्ठम् ॥

[11]एतां प्रियां तनुवं राजन्यापत्यं[1] उग्रदेवः आक्रमितवान् ॥

[12]अव्यतिषङ्गं अविपर्यस्तम् ॥

[13]विनिषद्य विविधमुपविश्य । ऊर्ध्वं नावाचीनम् । सर्वतः

[1]राजन्यस्यापत्यं.

र्वतो धून्वन्ति । तस्मादयꣳ सर्वतः पवते ॥ ४२ ॥

दधातीवान्वाह यज्ञस्याहैष उपरिष्टादाशीरन्यो
व्यास्थापयन्ति रश्मयो भवन्ति धन्वेत्याह
यज्ञश्वक्राम समष्ट्यै द्वे च ॥ ४ ॥

[1]अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह । अग्निरेवैनं वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा । समा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते। इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसेत्याह ।इन्द्र एवैनꣳ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा । समा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुण एवैनमादित्यैः पश्चाद्रोचयति जागतेन छन्दसा ॥ ४३ ॥ समा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रो-

सर्वासु दिक्षु । अयं वायुः सर्वतः सर्वत्र गच्छति ॥

इत्यष्टमप्रपाठके चतुर्थोऽनुवाकः.

चयत्वानुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो मरुद्भिरुत्तरतो रोचयत्यानुष्टुभेन छन्दसा । समां रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसेत्याह । बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोचयति पाङ्क्तेन छन्दसा । समां रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते ॥ ४४ ॥ रोचितस्त्वं देव घर्म देवेष्वसीत्याह । रोचितो ह्येष देवेषु । रोचिषीयाहं मनुष्येष्वित्याह । रोचत एवैष मनुष्येषु । सम्राड्घर्मरुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसीत्याह । रुचितो ह्येष देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी । रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह । रुचित एवैष मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भवति । रुगसि रुचं मयि धेहि मयि रुगित्याह । आशिषमेवैतामाशास्ते । [2]तं यदेतैर्यजुर्भिररोचयित्वा । रुचितो घर्म इति प्रब्रूयात् । अरोचुकोऽध्व-

[1]अग्निष्टेति स्पष्टः ॥

र्युस्स्यात् । अरोचुको यजमानः । अथ यदेनमेतै-र्यजुर्भी रोचयित्वा । रुचितो घर्म इति प्राह । रोचुकोऽध्वर्युर्भवति । रोचुको यजमानः ॥ ४५ ॥

पश्चाद्रोचयति जागतेन छन्दसा समा रुचितो रोचयेत्याहाशिषमेवैतामाशास्ते शास्तेऽष्टौ च ॥ ५ ॥

[1]शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । ग्रीवा उपसदः । पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति । ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति । त्रिः प्रवृणक्ति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽवरुन्धे । षट्थ् सम्पद्यन्ते । षड्वा ऋतवः ॥ ४६ ॥ ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे । [2]द्वादशकृत्वः प्रवृणक्ति । द्वादश मासास्संवथ्सरः । संवथ्सरादेव

---

[2]अरोचयित्वा मन्त्रदीप्तिमकृत्वा । अरोचुकः रुचिहीनः ॥

इत्यष्टमप्रपाठके पञ्चमोऽनुवाकः.

[1]ग्रीवास्थानीया उपसदः । अग्निष्टोमं प्रकृत्य उच्यते प्रवृणक्तीत्यनारभ्याधीतत्वात् ॥

यज्ञस्य शिरोऽवरुन्धे । चतुर्विꣳशतिस्संपद्यन्ते । चतुर्विꣳशतिरर्धमासाः । अर्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे । अथो खलु । सकृदेव प्रवृज्यः । एकꣳ हि शिरः ॥ ४७ ॥ अग्निष्टोमे प्रवृणक्ति । एतावान् वै यज्ञः । यावानग्निष्टोमः । यावानेव यज्ञः । तस्य शिरः प्रतिदधाति । [3]नोक्थ्ये प्रवृञ्ज्यात् । प्रजा वै पशव उक्थानि । यदुक्थ्ये प्रवृञ्ज्यात् । प्रजां प॒शूनस्य निर्दहेत् । [4]विश्वजिति सर्वपृष्ठे प्रवृणक्ति ॥ ४८ ॥ पृष्ठानि वा अच्युतं च्यावयन्ति । पृष्ठैरेवास्मा अच्युतं च्यावयित्वाऽवरुन्धे । अपश्यं गोपामित्याह । प्राणो वै गोपाः । [5]प्राणमेव प्रजासु वियातयति । अपश्यं गोपामित्याह । असौ वा

---

[2]द्वादशकृत्व इत्याद्यहीनेषु । सकृदेव सद्य एव सुत्यायाम् ॥

[3]उक्थ्यसंस्थे क्रतौ न प्रवृञ्ज्यात् । "तन्तुरसि प्रजाभ्यस्त्वा पृतनाषाडसि पशुभ्यस्त्वा रेवदस्योषधीभ्यस्त्वा"* इत्युक्थ्यानि ॥

[4]विश्वजिति उक्थ्यसंस्थेऽपि । पृष्ठानि सम्भूय स्थितानि अच्युतं चालयितुमशक्यं धनादिकं परेभ्यः च्यावयन्ति ॥

---

* तै. सं. ३-५-२.

आदित्यो गोपाः। स हीमाः प्रजा गोपायति। तमेव प्रजानां गोप्तारं कुरुते । अनिपद्यमानमित्याह॥
४९॥ न ह्येष निपद्यते । आ च परा च पथिभिश्चरन्तमित्याह। आ च ह्येष परा च पथिभिश्चरति । स सध्रीचीस्स विषूचीर्वसान इत्याह । सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभि विपश्यति । आवरीवर्ति भुवनेष्वन्तरित्याह । आ ह्येष वरीवर्ति भुवनेष्वन्तः । अत्र प्रावीर्मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्याह । वासन्तिकावेवास्मा ऋतू कल्पयति । समग्निरग्निना गतेत्याह ॥५०॥ ग्रैष्मावेवास्मा ऋतू कल्पयति । समग्निरग्निना गतेत्याह । अग्निर्ह्येवैषोऽग्निना संगच्छते। स्वाहा समग्निस्तपसा गतेत्याह । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति । धर्ता दिवो विभासि रजसः पृथिव्या इत्याह ।वार्षिकावेवास्मा ऋतू कल्पयति। हृदे त्वा मनसे त्वेत्याह। शारदावेवास्मा ऋतू कल्पयति॥५१ ॥ दिवि देवेषु

---

[5]वियातयति विविधं यत्नं करोति । मधुमाध्वीभ्यामिति मन्त्रशब्दाद्वसन्तत्वम् । अग्निरग्निनेति घर्मरूपत्वात् ग्रीष्मः । सम-

होत्रां यच्छेत्याह । होत्राभिरेवेमान्लोकान्थ्सं दधा-
ति । विश्वासां भुवां पत इत्याह । हैमन्तिकावेवा-
स्मा ऋतू कल्पयति । देवश्रूस्त्वं देव घर्म देवान्पा-
हीत्याह । शैशिरावेवास्मा ऋतू कल्पयति । [6]त-
पोजां वाचमस्मे नियच्छ देवायुवमित्याह । या वै
मेध्या वाक् । सा तपोजाः । तामेवावरुन्धे ॥५२
[7]गर्भो देवानामित्याह । गर्भो ह्येष देवानाम् । पिता
मतीनामित्याह । प्रजा वै मतयः । तासामेष एव
पिता । यत्प्रवर्ग्यः । तस्मादेवमाह । पतिः प्रजा-
नामित्याह । पतिर्ह्येष प्रजानाम् । मतिः कवीना-
मित्याह ॥ ५३ ॥ मतिर्ह्येष कवीनाम् । [8]सं देवो
देवेन सवित्रा यतिष्ट सꣳ सूर्येणारुक्तेत्याह । अमुं

---

ग्निरग्निना गतेति पूर्वोक्तमर्थं स्वाहा समग्निरिति अभिगृणाति पुनर्वदति । त्रैलोक्याधारत्वात् वार्षिकत्वम् । हृदयादेस्तुष्टत्वात् शरत् । विश्वभुवनपतित्वात् हैमन्तिकत्वम् । देवेषु श्रूयमाणत्वात् शिशिरः ॥

[6] मेध्या यज्ञीया ॥

[7] आदित्यत्वेन घर्मस्स्तूयते—गर्भो देवानामित्यादिना ॥

त्रैवादित्यं प्रवर्ग्यं च सꣳ शास्ति । आयुर्दास्त्वम-
स्मभ्यं घर्म वर्चोदा असीत्याह । आशिषमेवैता-
माशास्ते । पिता नोऽसि पिता नो बोधेत्याह ।
बोधयत्येवैनम् । [9]नवैतेऽवकाशा भवन्ति । पत्नियै
दशमः । नव वै पुरुषे प्राणाः ॥ ५४ ॥ ना-
भिर्दशमी । प्राणानेव यजमाने दधाति । अथो द-
शाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमव
रुन्धे । [10]यज्ञस्य शिरोऽच्छिद्यत । तद्देवा होत्राभिः
प्रत्यदधुः । ऋत्विजोऽवेक्षन्ते । एता वै होत्राः ।
होत्राभिरेव यज्ञस्य शिरः प्रति दधाति ॥ ५५ ॥
[11]रुचितमवेक्षन्ते । रुचिताद्वै प्रजापतिः प्रजा अ-
सृजत । प्रजानाꣳ सृष्ट्यै । रुचितमवेक्षन्ते । रुचि-
ताद्वै पर्जन्यो वर्षति । वर्षुकः पर्जन्यो भवति ।
सं प्रजा एधन्ते । रुचितमवेक्षन्ते । रुचितं वै ब्र-

---

[8]आदित्यप्रवर्ग्यौ अविवादं प्रतिशास्ति ॥

[9]अवकाशाः तत्संज्ञा मन्त्राः ॥

[10]होत्राभिः ऋत्विग्भिः ॥

[11]रुचितं दीप्तम् ॥

ह्मवर्चसम् । ब्रह्मवर्चसिनो भवन्ति ॥ ५६ ॥ [12]अधीयन्तोऽवेक्षन्ते । सर्वमायुर्यन्ति । [13]न पत्नयवेक्षेत । यत्पत्नयवेक्षेत । प्रजायेत । प्रजां त्वस्यै निर्दहेत् । यन्नावेक्षेत । न प्रजायेत । नास्यै प्रजां निर्दहेत् । तिरस्कृत्य यजुर्वाचयति । प्रजायते । नास्यै प्रजां निर्दहति । [14]त्वष्टीमती ते सपेयेत्याह । सपाद्धि प्रजाः प्र जायन्ते ॥ ५७ ॥

ऋतवो हि शिरस्सर्वपृष्ठे प्रवृणक्त्यनिपद्यमानमित्याह गतेत्याह शारदावेवास्मा ऋतू कल्पयति रुन्धे कवीनामित्याह प्राणाः प्रतिदधाति भवन्ति वाचयति चत्वारि च ॥ ६ ॥

---

[12]अपश्यं गोपामिति मन्त्रत्रातृत्वात् आयुष्मन्तः ॥

[13]पुरुषनिरीक्षणात् पत्नी प्रसूयते । तिरस्कृत्य वेदेन ॥

[14] त्वष्टीमतीति ॥ पत्या सपात् मेहनात् ॥

इत्यष्टमप्रपाठके षष्ठोऽनुवाकः.

[1]देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। आददेऽदित्यै रास्नाऽसीत्याह यजुष्कृत्यै। इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै देवनामानि। देवनामैरेवैनामाह्वयति। असावेह्यसावेह्यसावेहीत्याह। एतानि वा अस्यै मनुष्यनामानि ॥ ५८ ॥ मनुष्यनामैरेवैनामाह्वयति। षट्थ् सम्पद्यन्ते। षड्वा ऋतवः। ऋतुभिरेवैनामाह्वयति। अदित्या उष्णीषमसीत्याह। यथायजुरेवैतत्। वायुरस्यैड इत्याह। वायुदेवत्यो वै वथ्सः। पूषा त्वोपावसृजत्वित्याह। पौष्णा वै देवतया पशवः ॥ ५९ ॥ स्वयैवैनं देवतयोपावसृजति। अश्विभ्यां प्रदापयेत्याह। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति। यस्ते स्तनश्शशय इत्याह। स्तौत्येवैनाम्। उस्र घर्मꣳ शिꣳषोस्र घर्मं पाहि घर्माय शिꣳषेत्याह। यथा ब्रूयादमुष्मै

---

[1]यजुष्कृत्यै मन्त्रसंस्काराय ॥

देहीति । तादृगेव तत् । बृहस्पतिस्त्वोपसीदत्वित्याह ॥ ६० ॥ ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनामुप सीदति । दानवस्स्थ पेरव इत्याह । मेध्यानेवैनांकरोति । विष्वग्वृतो लोहितेनेत्याह व्यावृत्यै । अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पिन्वते । इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह । इन्द्रमेव भागधेयेन समर्धयति । द्विरिन्द्रायेत्याह ॥ ६१ ॥ तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः । [2]गायत्रोसि त्रैष्टुभोसि जागतमसीति शफोपयमानादत्ते । छन्दोभिरेवैनानादत्ते । [3]सहोर्जो भागेनोपमेहीत्याह । ऊर्ज एवैनं भागमकः । अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूताम् । आवाभ्यामेव पूर्वाभ्यां वषट्क्रियाता इति । इ-

[2]शफोपयमान् शफौ उपयमं च* ॥

[3]ऊर्जः अन्नस्य भागं करोति । प्रतिदधतौ यथास्थानं स्थापयन्तौ । वषट्क्रियातै होतव्यम् ॥

*शफौ महावीरसंदंसिकाष्ठद्वयम् । महावीरस्याधस्ताद्धार्यमाणः काष्ठविशेष उपयमः.

न्द्राश्विना मधुनस्सारघस्येत्याह । अश्विभ्यामेव पूर्वाभ्यां वषट्करोति । अथो अश्विनावेव भागधेयेन समर्धयति ॥ ६२ ॥ घर्मं पात वसवो यजता वडित्याह । वसूनेव भागधेयेन समर्धयति । [4]यद्वषट्कुर्यात् । यातयामाऽस्य वषट्कारस्स्यात् । यन्न वषट्कुर्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । वडित्याह । परोक्षमेव वषट्करोति । नास्य यातयामा वषट्कारो भवति । न यज्ञꣳ रक्षाꣳसि घ्नन्ति ॥ ६३ ॥ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह । यो वा अस्य पुण्यो रश्मिः । स वृष्टिवनिः । तस्मा एवैनं जुहोति । मधु हविरसीत्याह । स्वदयत्येवैनम् । सूर्यस्य तपस्तपेत्याह । यथायजुरेवैतत् । द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्याह । द्यावापृथिवीभ्यामेवैनं परिगृह्णाति ॥ ६४ ॥ अन्तरिक्षेण त्वोपयच्छामीत्याह । अन्तरिक्षेणैवैनमुपयच्छति । न वा एतं मनुष्यो भर्तुमर्हति । दे-

---

[4]पुनरपि वषट्कारे यातयामत्वम् ॥

वानां त्वा पितृणामनुमतो भर्तुं शकेयमित्याह।
देवैरेवैनं पितृभिरनुमत आदत्ते । [5]विवा एनमे-
तदर्धयन्ति । यत्पश्चात्प्रवृज्यं पुरो जुह्वति । तेजो-
सि तेजोऽनु प्रेहीत्याह । तेज एवास्मिन्दधाति ।
दिविस्पृङ्मा मां हिꣳसीरन्तरिक्षस्पृङ्मा मां हिꣳसीः
पृथिविस्पृङ्मा मां हिꣳसीरित्याहाहिꣳसायै ॥ ६५॥
सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मां पाही-
त्याह । आशिषमेवैतामाशास्ते । [6]शिरो वा एतद्य-
ज्ञस्य । यत्प्रवर्ग्यः । आत्मा वायुः । उद्यत्य वा-
तनामान्याह । आत्मन्नेव यज्ञस्य शिरः प्रतिदधा-
ति । अनवानम् । प्राणानाꣳ संतत्यै । पश्चाह ॥६६
पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः प्रतिदधा-
ति । अग्नये त्वा वसुमते स्वाहेत्याह । असौ वा
आदित्योऽग्निर्वसुमान् । तस्मा एवैनं जुहोति । सो-

---

[6]गार्हपत्याग्नौ प्रवृज्याहवनीयहोमे व्यृद्धिः ॥

[6]यज्ञस्य आत्मा वायुः "अयं वाव यः पवते स यज्ञः"*
इत्युक्तत्वात् । उद्यत्य आदाय पश्चानवानमित्युक्तं आह ॥

*सं. ६-१-४.

माय त्वा रुद्रवते स्वाहेत्याह । चन्द्रमा वै सोमो रुद्रवान् । तस्मा एवैनं जुहोति । वरुणाय त्वाऽऽदित्यवते स्वाहेत्याह ॥ ६७ ॥ अप्सु वै वरुण आदित्यवान् । तस्मा एवैनं जुहोति । बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मण एवैनं जुहोति । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह । संवथ्सरो वै सविता र्भुमान् विभुमान्प्रभुमान् वाजवान् । तस्मा एवैनं जुहोति । यमाय त्वाऽऽङ्गिरस्वते पितृमते स्वाहेत्याह । प्राणो वै यमोऽङ्गिरस्वान्पितृमान् ॥ ६८ ॥ तस्मा एवैनं जुहोति । एताभ्य एवैनं देवताभ्यो जुहोति । [7]दश संपद्यन्ते । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । [8]रौहिणाभ्यां वै देवास्सुवर्गं लोकमायन्न् । तद्रौहिणयो रौहिणत्वम् । यद्रौहिणौ भवतः । रौहिणाभ्यामेव तद्यजमानस्सुवर्गं लोकमेति । अह-

---

[7]यमसवित्रोर्विशेषणैः सह दश सम्पद्यन्ते देवताः ॥

[8]रौहिणाभ्यां हुताभ्यां स्वर्गारोहणम् ॥

ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्याह । [9]आदित्यमेव तदमुष्मिन्लोकेऽह्ना परस्ताद्दाधार । रात्रिया अवस्तात् । तस्मादसावादित्योऽमुष्मिन्लोकेऽहोरात्राभ्यां धृतः ॥ ६ १ ॥

मनुष्यनामानि पशवस्सीदत्वित्याहेन्द्रायेत्याहार्धयति घ्नन्ति गृह्णात्यहिꣳसायै पश्चाद्धादित्यवते स्वाहेत्याह पितृमानेति चत्वारि च ॥ ७ ॥

[1]विश्वा आशा दक्षिणसदित्याह । विश्वानेव देवान्प्रीणाति । अथो दुरिष्ट्या एवैनं पाति । विश्वान्देवानयाडिहेत्याह । विश्वानेव देवान्भागधेयेन समर्धयति । स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेत्याह । अश्विनावेव भागधेयेन समर्धयति ।

---

[9]अह्ना परस्तात् ऊर्ध्वं दाधार अवस्तात् पाताळे । अहोरात्राभ्यां धृतः तदायत्तस्थितिर्भवति ॥

इत्यष्टमप्रपाठके सप्तमोऽनुवाकः.

——o——

स्वाहाऽग्नये यज्ञियाय शं यजुर्भिरित्याह । अभ्ये-
वैनं घारयति । अथो हविरेवाकः ॥ ७० ॥ अश्वि-
ना घर्मं पातꣳ हार्दिवानमहर्दिवाभिरूतिभिरित्या-
ह । अश्विनावेव भागधेयेन समर्धयति । अनु वां
द्यावापृथिवी मꣳसातामित्याहानुमत्यै । स्वाहे-
न्द्राय स्वाहेन्द्रा वडित्याह । इन्द्राय हि पुरो हूय-
ते । आश्राव्याह घर्मस्य यजेति । वषट्कृते जुहोति।
रक्षसामपहत्यै । अनुयजति स्वगाकृत्यै । घर्मम-
पातमश्विनेत्याह ॥ ७१ ॥ पूर्वमेवोदितम् । उत्तरे-
णाभि गृणाति । अनु वां द्यावापृथिवी अमꣳसा-
तामित्याहानुमत्यै । तं प्राव्यं यथावण्णमो दिवे
नमः पृथिव्या इत्याह । यथायजुरेवैतत् । दिवि-
धा इमं यज्ञं यज्ञमिमं दिविधा इत्याह । सुवर्ग-
मेवैनं लोकं गमयति । दिवं गच्छान्तरिक्षं गच्छ
पृथिवीं गच्छेत्याह । एष्वेवैनं लोकेषु प्रतिष्ठापय-
ति । पञ्च प्रदिशो गच्छेत्याह ॥ ७२ ॥ दिक्ष्वेवैनं
प्रतिष्ठापयति । [2]देवान्घर्मपान्गच्छ पितॄन्घर्मपा-

---

[1] एनमभिघारयत्येव । हविरेव करोति ॥

न्गच्छेत्याह । उभयेष्वेवैनं प्रतिष्ठापयति । यत्पि-न्वते । वर्षुकः पर्जन्यो भवति । तस्मात्पिन्व-मानः पुण्यः । यत्प्राङ्पिन्वते । तद्देवानाम् । यद्द-क्षिणा । तत्पितृणाम् ॥ ७३ ॥ यत्प्रत्यक् । तन्म-नुष्याणाम् । यदुदङ् । तद्रुद्राणाम् । प्राञ्चमुदञ्चं पिन्वयति । देवत्राऽकः । अथो खलु । सर्वा अनु दिशः पिन्वयति । सर्वा दिशस्समेधन्ते । अन्तःप-रिधि पिन्वयति ॥७४॥ तेजसोऽस्कन्दाय । इषे पी-पिह्यूर्जे पीपिहीत्याह । इषमेवोर्जं यजमाने दधाति । यजमानाय पीपिहीत्याह । यजमानायैवैतामाशि-षमाशास्ते । मह्यं ज्यैष्ठ्याय पीपिहीत्याह । आ-त्मन एवैतामाशिषमाशास्ते । त्विष्यै त्वा द्युम्ना-य त्वेन्द्रियाय त्वा भूत्यै त्वेत्याह । यथायजुरेवै-तत् । धर्मोऽसि सुधर्मा मेऽन्यस्मे ब्रह्माणि धार-येत्याह ॥ ७५ ॥ ब्रह्मन्नेवैनं प्रतिष्ठापयति । नेत्त्वा वातस्स्कन्दयादिति यद्यभिचरेत् । अमुष्य त्वा प्रा-

---

[2] उभयेषु देवपितृषु । पिन्वते रक्षति । पिन्वमानः दानशीलः पुण्यः देवत्रा देवेषु करोति । समेधन्ते वर्धन्ते ॥

णे सादयाम्यमुना सह निरर्थं गच्छेति ब्रूयाद्यं द्विष्यात् । यमेव द्वेष्टि । [3]तेनैनꣳ सह निरर्थं गमयति । पूष्णे शरसे स्वाहेत्याह । या एव देवता हुतभागाः । ताभ्य एवैनं जुहोति । ग्रावभ्यस्स्वाहेत्याह । या एवान्तरिक्षे वाचः ॥ ७६ ॥ ताभ्य एवैनं जुहोति । प्रतिरेभ्यस्स्वाहेत्याह । प्राणा वै देवाः प्रतिराः । तेभ्य एवैनं जुहोति । द्यावापृथिवीभ्याꣳ स्वाहेत्याह । द्यावापृथिवीभ्यामेवैनं जुहोति । पितृभ्यो घर्मपेभ्यस्स्वाहेत्याह । ये वै यज्वानः । ते पितरो घर्मपाः । तेभ्य एवैनं जुहोति॥ ७७ ॥ रुद्राय रुद्रहोत्रे स्वाहेत्याह । रुद्रमेव भागधेयेन समर्धयति । [4]सर्वतस्समनक्ति । सर्वत एव रुद्रं निरवदयते । उदञ्चं निरस्यति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । अप उपस्पृशति मेध्यत्वाय । नान्वीक्षेत । यद-

---

[3]निरर्थं नाशं गमयति ॥

[4]रौद्रस्य सर्वतः पात्रात् । शान्त्यै रौद्रं नान्वीक्षेत न पश्येत् चक्षुः प्रमायुकं मरणशीलं स्यात् अन्धो भवतीति यावत् ॥

न्वीक्षेत ॥ ७८ ॥ चक्षुरस्य प्रमायुकꣳ स्यात् । त-
स्मान्नान्वीक्ष्यः । अपीपरो माऽह्नो रात्रियै मा पा-
ह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा
माऽऽञ्जीरित्याह । आयुरेवास्मिन्वर्चो दधाति ।
अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने
समित्तया समिध्यस्वायुर्मे दा वर्चसा माऽऽञ्जीरि-
त्याह । आयुरेवास्मिन्वर्चो दधाति । अग्निर्ज्योति-
र्ज्योतिरग्निस्स्वाहा सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहे-
त्याह । यथायजुरेवैतत् । [5]ब्रह्मवादिनो वदन्ति ।
होतव्यमग्निहोत्रां३ न होतव्या३मिति ॥ ७९ ॥
यद्यजुषा जुहुयात् । अयथापूर्वमाहुती जुहुयात् ।
यन्न जुहुयात् । अग्निः पराभवेत् । भूस्स्वाहेत्येव
होतव्यम् । यथापूर्वमाहुती जुहोति । नाग्निः परा-
भवति । हुतꣳ हविर्मधु हविरित्याह । स्वदयत्ये-
वैनम् । [6]इन्द्रतमेऽग्नावित्याह ॥ ८० ॥ प्राणो वा
इन्द्रतमोऽग्निः । प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति ।

---

[5] प्रथमप्रवर्ग्यं प्रति विकारः भूस्स्वाहेति प्रथमे ॥

[6] इन्द्रतमः ईश्वरतमः ॥

पिता नोऽसि मा मां हिꣳसीरित्याहाहिꣳसायै । अश्याम ते देव घर्म मधुमतो वाजवतः पितुमत इत्याह । आशिषमेवैतामाशास्ते । स्वधाविनोऽशीमहि त्वा मा मां हिꣳसीरित्याहाहिꣳसायै । तेजसा वा एते व्यृध्यन्ते । ये प्रवर्ग्येण चरन्ति । प्राश्नन्ति । तेज एवात्मन्दधते ॥ ८१ ॥ [7]संवत्सरं न माꣳसमश्नीयात् । न रामामुपेयात् । न मृन्मयेन पिबेत् । नास्य राम उच्छिष्टं पिबेत् । तेज एव तत्सꣳश्यति । [8]देवासुरास्संयत्ता आसन्न् । ते देवा विजयमुपयन्तः । विभ्राजि सौर्ये ब्रह्म संन्यदधत । यत्किंच दिवाकीर्त्यम् । तदेतेनैव व्रतेनागोपायत् । तस्मादेतद्व्रतं चार्यम् । तेजसो गोपीथाय । तस्मादेतानि यजूꣳषि विभ्राजस्सौर्यस्येत्याहुः । स्वाहा त्वा सूर्यस्य रश्मिभ्य

---

[7] प्रवर्ग्यं भक्षयिता संवत्सरं न मांसमश्नीयात् न रामां शूद्रां उपेयात् । रामः शूद्रः । संश्यति तीक्ष्णीकरोति ॥

[8] विभ्राजि विभ्राजमाने सौर्ये सूर्यापत्ये ब्रह्म प्रवर्ग्यमन्त्रं संन्यदधत संन्यदधुः । दिवाकीर्त्यं सौर्यत्वात् । एतेन व्रतेन

इति प्रातस्सꣳसादयति । स्वाहा त्वा नक्षत्रेभ्य इति सायम् । एता वा एतस्य देवताः । ताभिरेवैनꣳ समर्धयति ॥ ८२ ॥

अकरश्विनेत्याह प्रदिशो गच्छेत्याह पितॄणामन्तःपरिधि पिन्वयति धारयेत्याह वाचो घर्मपास्तेभ्य एवैनं जुहोत्यन्वीक्षेत होतव्या३मित्यग्नावित्याह दधतेऽगोपायथ्सप्त च ॥ ८ ॥

[1]घर्म या ते दिवि शुगिति तिस्र आहुतीर्जुहोति । छन्दोभिरेवास्यैभ्यो लोकेभ्यश्शुचमवयजते । इयत्यग्रे जुहोति । अथेयत्यथेयति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यश्शुचमव यजते । अनु नोऽद्यानुमतिरित्याहानुमत्यै । [2]दिवस्त्वा परस्पाया

---

अमांसाशनादिना तत् ब्रह्म अरक्षत् । सौर्यस्य सूर्यापत्यस्य विभ्राजः विभ्राणणाम्नः ॥

इत्यष्टमे अष्टमोऽनुवाकः.

---

[1]अवयजते नाशयति । इयतीति त्रिर्वचनेन जानुनाभिग्रीवामात्रा उच्यन्ते ॥

इत्याह । दिव एवेमान्लोकान्दाधार । ब्रह्मणस्त्वा प-
रस्पाया इत्याह ॥८३॥ एष्वेव लोकेषु प्रजा दाधार।
प्राणस्य त्वा परस्पाया इत्याह । प्रजास्वेव प्रा-
णान्दाधार । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः ।
असौ खलु वा आदित्यः प्रवर्ग्यः । [3]तं यद्दक्षिणा
प्रत्यञ्चमुदञ्चमुद्वासयेत् । जिह्मं यज्ञस्य शिरो ह-
रेत् । प्राञ्चमुद्वासयति । पुरस्तादेव यज्ञस्य शिरः
प्रतिदधाति ॥ ८४ ॥ प्राञ्चमुद्वासयति । तस्माद-
सावादित्यः पुरस्तादुदेति । शफोपयमान्धवित्राणि
धृष्टी इत्यन्ववहरन्ति । सात्मानमेवैनꣳ सतनुं क-
रोति । सात्माऽमुष्मिन्लोके भवति । य एवं वेद ।
औदुम्बराणि भवन्ति । ऊर्ग्वा उदुम्बरः । ऊर्जमे-
वाव रुन्धे । [4]वर्त्मना वा अन्वित्य ॥ ८५॥ यज्ञꣳ
रक्षाꣳसि जिघाꣳसन्ति । साम्ना प्रस्तोताऽन्ववैति।
साम वै रक्षोहा । रक्षसामपहत्यै । त्रिर्निधनमुपै-

---

[2] दिव एव स्वर्गार्थम् । प्रजाः वर्णान् ॥

[3] दक्षिणा दक्षिणायाम् । प्रत्यञ्चं प्रतीच्यां उदञ्चं उदीच्यां च यदि उद्वासयेत् जिह्मं कुटिलम् । औदुम्बर्यामुद्वासयेत् ॥

ति । त्रयं इमे लोकाः । एभ्य एव लोकेभ्यो र-
क्षाꣳस्यपंहन्ति । पुरुंषःपुरुषो निधनमुपैति । पु-
रुंषःपुरुषो हि रक्षस्वी । रक्षंसामपंहत्यै ॥ ८६ ॥
[5]यत्पृंथिव्यामुंद्वासयेत् । पृथिवीꣳ शुचाऽर्पयेत् ।
यदप्सु । अपश्शुचाऽर्पयेत् । यदोषंधीषु । ओषं-
धीश्शुचाऽर्पयेत् । यद्वनस्पतिंषु । वनस्पतीञ्छुचाऽ-
र्पयेत् । हिरंण्यं निधायोद्वासयति । अमृतं वै हि-
रंण्यम् ॥ ८७ ॥ अमृतं एवैनं प्रतिष्ठापयति । व-
ल्गुरंसि शंयुधाया इति त्रिः परिषिञ्चन्पर्यैति । त्रि-
वृद्वा अग्निः । यावानेवाग्निः । तस्य शुचꣳ शम-
यति । त्रिः पुनः पर्यैति । षट्थ् संपंद्यन्ते । षड्वा
ऋतवः । ऋतुभिरेवास्य शुचꣳ शमयति । चतुं-
स्स्रक्तिर्नाभिर् ऋतस्येत्यांह ॥ ८८ ॥ इयं वा ऋ-
तम् । तस्यां एष एव नाभिंः । यत्प्रवर्ग्यंः । तस्मां-
देवमांह । सदों विश्वायुरित्यांह । सदो हीयम् । अप

[4]वर्त्मना मार्गेण अन्वित्यानुगत्य । पुरुषःपुरुषः एकैकशः पृथग्भिः रक्षोभिः बाध्यते ॥

[5]यत्पृथिव्यामिति हिरण्यनिधानार्थवादः ॥

द्वेषो अप हर इत्याह भ्रातृव्यापनुत्त्यै । घर्मैतत्तेऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेण पूरयति । ऊर्ग्वा अन्नाद्यं दधि । ऊर्जैवैनमन्नाद्येन समर्धयति ॥८९॥ अनशनायुको भवति । य एवं वेद । रन्तिर्नामासि दिव्यो गन्धर्व इत्याह । रूपमेवास्यैतन्महिमानꣳ रन्तिं बन्धुतां व्याचष्टे । समहमायुषा सं प्राणेनेत्याह । आशिषमेवैतामाशास्ते । व्यसौ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह । अभिचार एवास्यैषः । अचिक्रदद्वृषा हरिरित्याह । वृषा ह्येषः ॥९०॥ वृषा हरिः । महान्मित्रो न दर्शत इत्याह । स्तौत्येवैनमेतत् । चिदसि समुद्रयोनिरित्याह । स्वामेवैनं योनिं गमयति । नमस्ते अस्तु मा मा हिꣳसीरित्याहाहिꣳसायै । विश्वावसुꣳ सोमगन्धर्वमित्याह । यदेवास्य क्रियमाणस्यान्तर्यन्ति । तदेवास्यैतेनाप्याययति । विश्वावसुरभि तन्नो गृणात्वित्याह ॥९१॥ पूर्वमेवोदितम् । उत्तरेणाभिगृणाति ।

धियो हिन्वानो धिय इन्नो अव्यादित्याह । ऋतूनेवास्मै कल्पयति । प्रासां गन्धर्वो अमृतानि वोचदित्याह । प्राणा वा अमृताः । प्राणानेवास्मै कल्पयति । एतत्त्वं देव घर्म देवो देवानुपागा इत्याह । देवो ह्येष सन्देवानुपैति । इदमहं मनुष्यो मनुष्यानित्याह ॥ १२ ॥ मनुष्यो हि । एष सन्मनुष्यानुपैति । ईश्वरो वै प्रवर्ग्यमुद्वासयन्न् । प्रजां पशून्थ्सोमपीथमनूद्वासस्सोमपीथानुमेहि । सह प्रजया सह रायस्पोषेणेत्याह । प्रजामेव पशून्थ्सोमपीथमात्मन्धत्ते । सुमित्रा न आप ओषधयस्सन्त्वित्याह । आशिषमेवैतामाशास्ते । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह । अभिचार एवास्यैषः । प्र वा एषोऽस्माल्लोकाच्च्यवते । यः प्रवर्ग्यमुद्वासयति । उदु त्यं चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति । अयं वै लोको गार्हपत्यः । अ-

स्मिन्नेव लोके प्रतितिष्ठति । असौ खलु वा आदित्यस्सुवर्गो लोकः । यथ्सौरी भवतः । तेनैव सुवर्गाल्लोकान्नेति ॥ १३ ॥

ब्रह्मणस्त्वा परस्पाया इत्याह दधात्यन्वित्यं रक्षस्वी रक्षसामपहत्यै वै हिरण्यमाहार्धयति ह्येष गृणात्वित्याह मनुष्यानित्याहास्यैषोऽष्टौ च ॥१॥

[1]प्रजापतिं वै देवाश्शुक्रं पयोऽदुह्रन् । तदेभ्यो न व्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन् । तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूꣳष्यभवन् । शुक्रियाणां वा एतानि शुक्रियाणि । सामपयसं वा एतयोरन्यत् । देवानामन्यत्पयः । यद्गोः पयः ॥ १४ ॥ तत्साम्नः पयः ।

---

[6]अनशनायुकः अशनापीडारहितः । रन्ति गन्धर्वं प्रवर्ग्यम् । अनुव्रजनादिकं उद्वासः उद्वासयितुम् ॥

इति नवमोऽनुवाकः.

---

[1]प्रजापतिं गोभूतं शुक्रं सारं पयः देवा दुदुहुः । न व्यभवत् अभिवृद्धं नाभूत् । तदग्निः व्यकरोत् विकृतमकरोत् । तानि वि-

यद्जायै पयः । तद्देवानां पयः । तस्माद्यत्रैतैर्यजुर्भिश्चरन्ति । तत्पयसा चरन्ति । प्रजापतिमेव तद्देवान्पयसाऽन्नाद्येन समर्धयन्ति । एष ह त्वै साक्षात्प्रवर्ग्यं भक्षयति । यस्यैवं विदुषः प्रवर्ग्यः प्रवृज्यते । उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य । तेजो वा उत्तरवेदिः ॥ १५ ॥ तेजः प्रवर्ग्यः । तेजसैव तेजस्समर्धयति । उत्तरवेद्यामुद्वासयेदन्नकामस्य । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । [2]मुखमुत्तरवेदिः । शीर्ष्णैव मुख॒ँ संदधात्यन्नाद्याय । अन्नाद एव भवति । यत्र खलु वा एतमुद्वासितं वयाꣳसि पर्यासते । परि वै ताꣳ समां प्रजा वयाꣳस्यासते ॥ १६ ॥ तस्मादुत्तरवेद्यामेवोद्वासयेत् । प्रजानां गो-

---

कृतानि दैवतानि सामानि । तेषां साम्नां शुक्रं यजूंषि प्रवर्ग्यमन्त्राः । एतानि यजूंषि सारात् सारतराणि । एतयोः गोऽजापयसोः अन्यत् सामपयसं अन्यद्देवानां यजुषाम् । तदेव स्पष्टयति—यद्गोरिति । तत्पयसा प्रजापतिः [तेः] पयसा ॥

[2]मुखम् आस्यम् । यत्रोद्वासितं वयांसि पक्षिणः । परि समां परितस्संवत्सरं एताः प्रजाः पक्षिण आसते तस्यामेव ॥

पीथायं । [3]पुरो वां पश्चाद्वोद्वांसयेत् । पुरस्ताद्वा एतज्ज्योतिरुदेति । तत्पश्चान्निम्रोचति । स्वामेवैनं योनिमनूद्वांसयति । अपां मध्य उद्वांसयेत् । अपां वा एतन्मध्याज्ज्योतिरजायत । ज्योतिः प्रवर्ग्यः । स्व एवैनं योनौ प्रतिष्ठापयति ॥१७॥ यं द्विष्यात् । यत्र स स्यात् । तस्यां दिश्युद्वांसयेत् । एष वा अग्निर्वैश्वानरः । यत्प्रवर्ग्यः । अग्निनैवैनं वैश्वानरेणाभि प्रवर्तयति । औदुम्बर्या॒ शाखायामुद्वांसयेत् । ऊर्ग्वा उदुम्बरः । अन्नं प्राणः । शुग्घर्मः ॥ १८ ॥ [4]इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहामीत्याह । शुचैवास्य प्राणमपि दहति । ताजगार्तिमार्छति । यत्र दर्भा उपदीकसन्तताः स्युः । तदुद्वांसयेद्वृष्टिकामस्य । एता वा अपामनूज्झावर्यो नाम । यद्दर्भाः । असौ खलु वा आदित्य इतो वृष्टिमुदीरयति । असावेवास्मा आ-

[3]पुरो वेत्यादि ॥ एतत् आदित्याख्यं ज्योतिः ॥

[4]ताजक् शीघ्रम् । अपामनूज्झावर्यः सारतरः इतः अस्मा-

दित्यो वृष्टिं नियंच्छति । ता आपो नियंता धन्वं-
ना यन्ति ॥ ११ ॥

गोःपयं उत्तरवेदिरांसते स्थापयति घर्मो
यंन्ति ॥ १० ॥

[1]प्रजापंतिस्संभ्रियमाणः । सम्राट्थ् संभृतः ।
घर्मः प्रवृक्तः । महावीर उद्वासितः । असौ खलु
वावैष आंदित्यः । यत्प्रवर्ग्यः । स एतानि नामा-
न्यकुरुत । य एवं वेद । विदुरेनं नाम्ना । ब्रह्मवा-
दिनों वदन्ति ॥ १०० ॥ [2]यो वै वसीयाꣳसं य-
थानाममुंपचरति । पुण्यार्तिं वै स तस्मैं कामय-
ते । पुण्यार्तिमस्मै कामयन्ते । य एवं वेद । त-

ल्लोकात् उदीरयति ऊर्ध्वं गमयति । नियच्छति नियमयति ।
धन्वना भूप्रदेशेन यन्ति गच्छन्ति ॥

इति दशमोऽनुवाकः.

[1]प्रायश्चित्तार्था देवताः—प्रजापतिरित्यादि ॥

[2]वसीयांसं श्रेष्ठं यथानामं अनर्थकृतेन नाम्ना उपचरति पूज-
यति स तस्य पुण्यार्तिं पुण्यनाशं कामयते । एवं विदुषः पु-

स्मां देवं विद्वान् । घर्म इति दिवाऽऽचक्षीत । सं-राडिति नक्तम् । एते वा एतस्य प्रिये तनुवौ । एते अस्य प्रिये नामनी । प्रिययैवैनं तनुवा ॥ १०१ ॥ प्रियेण नाम्ना समर्धयति । [3]कीर्तिरस्य पूर्वा गच्छति जनतामायतः । गायत्री देवेभ्योपा-क्रामत् । तां देवाः प्रवर्ग्येणैवानु व्यभवन् । प्रव-र्ग्येणाप्नुवन् । यच्चतुर्विंशतिः कृत्वः* प्रवर्ग्यं प्रवृ-णक्ति । गायत्रीमेव तदनु विभवति । गायत्रीमा-प्नोति । पूर्वाऽस्य जनं यतः कीर्तिर्गच्छति । वैश्वदे-वस्सꣳसन्नः ॥ १०२ ॥ वसवः प्रवृक्तः । सोमोऽ-भिकीर्यमाणः । आश्विनः पर्यस्यानीयमाने । मा-रुतः क्वथन् । पौष्ण उदन्तः । सारस्वतो विष्य-

---

ण्यस्यार्तिं कामयन्ते । तस्मात् कारणात एवं विद्वान्—घर्म इत्यादि । यद्वा—विद्यादिना श्रेष्ठं यो यथामानं कालानुकूलेन नाम्ना आह्वयति स तस्य पुण्ये आर्तिं व्यसनं पुण्यार्तिं तस्य पुण्य-शीलतां कामयते । तस्मात् धर्मकालानुकूलेन नाम्ना वदेदित्यर्थः ॥

[3]जनतां ग्रामादि । अनुव्यभवन् अन्वगच्छन् चतुर्विंशतिः द्वादशाहं प्रकृत्य जनं ग्रामम् । अभिकीर्यमाणः अङ्कुरैः ॥

---

*शतिकृत्वः.

न्दमानः । मैत्रश्शरो गृहीतः । तेज उद्यतो वायुः। ह्रियमाणः प्रजापतिः । हूयमानो वाग्घुतः ॥१०३ असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः । स एतानि नामान्यकुरुत । य एवं वेद । विदुरेनं नाम्ना । [4]ब्रह्मवादिनो वदन्ति । यन्मृन्मयमाहुतिं नाश्नुतेऽथ । कस्मादेषोऽश्नुत इति । वागेष इति ब्रूयात् । वाच्येव वाचं दधाति ॥ १०४ ॥ तस्मादश्नुते । प्रजापतिर्वा एष द्वादशधा विहितः । यत्प्रवर्ग्यः। यत्प्रागवकाशेभ्यः । तेन प्रजा असृजत । अवकाशैर्देवासुरानसृजत । यदूर्ध्वमवकाशेभ्यः । तेनान्नमसृजत । अन्नं प्रजापतिः । प्रजापतिर्वावैषः ॥ १०५ ॥

वदन्ति तनुवा सꣳसन्नो हूयमानो
वाग्घुतो दधात्येषः ॥ ११ ॥

---

[4]अमृन्मयं उदपात्रं आहुतिं हविः नाश्नुते । अथ कस्मात् यज्ञे क्रियते वागेष इति । प्रवर्ग्यः इयं वाक् द्वादशाहे द्वादशधा प्रजापतिरेव कृतः । अवकाशेभ्यः अवकाशमन्त्रेभ्यः । एष आदित्यः ॥

इति एकादशोऽनुवाकः.

[1]सविता भूत्वा प्रथमेऽहन्प्रवृज्यते । तेन कामा॒ꣳ एति । यद्द्वितीयेऽहंन्प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृतीयेऽहंन्प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽहंन्प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पंञ्चमेऽहंन्प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति ॥ १०६ ॥ यथ्षष्ठेऽहंन्प्रवृज्यते । ऋतुर्भूत्वा संवथ्सरमेति । यथ्सप्तमेऽहंन्प्रवृज्यते । धाता भूत्वा शक्करीमेति । यदष्टमेऽहंन्प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽहंन्प्रवृज्यते । मित्रो भूत्वा त्रिवृतं इमान्लोकानेति । यद्दशमेऽहंन्प्रवृज्यते । वरुणो भूत्वा विराजमेति ॥ १०७॥ यदेकादशेऽहंन्प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । यद्द्वादशेऽहंन्प्रवृज्यते । सोमो भूत्वा सुत्यामेति । [2]यत्पुरस्तादुपसदां प्रवृज्यते । तस्मादितः पराङमूँल्लोकाꣳस्तपन्नेति । यदुपरिष्टादुपसदां प्रवृज्यते।

---

[1]प्रथमेऽह्नि प्रवृज्यते तेन सविता भूत्वा यजमानस्सर्वान् कामान् आप्नोति । एतेन उत्तरे व्याख्याताः ॥

तस्मादमुतोऽर्वाङिमान्लोकाꣳस्तपन्नेति । य एवं वेद । ऐव तपति ॥ १०८ ॥

नक्षत्राण्येति विराजमेति तपति ॥ १२ ॥

देवा वै सत्रꣳ सावित्रं परिश्रिते ब्रह्मन्प्रचरिष्यामोऽग्निष्ट्वा शिरो ग्रीवा देवस्य रशना विश्वा आशा घर्म या ते प्रजापतिꣳ शुक्रं प्रजापतिस्सं-भ्रियमाणस्सविता भूत्वा द्वादश ॥ १२ ॥

देवा वै सत्रꣳ स खदिरः परिश्रितेऽभिपूर्वमथो रक्षसां ग्रैष्मा वेवास्मै ब्रह्म वै देवानामश्विना घर्मं पातं प्राणो वै वृषा हरियो वै वसीयाꣳसं यथा-नाममष्टोत्तरशतम् ॥ १०८ ॥

शं नस्तन्नो मा हासीत्.

ओं शान्तिश्शान्तिश्शान्तिः ॥ हरिः ओम् ॥

---

[२]तस्मात् कर्मणः इतो लोकात् गच्छन् स्वर्गादिं तपन् गच्छति । अमुतो लोकात इमान् लोकान् सर्वत आदित्यात्मा तपतीत्येव । आदित्यो भवतीत्यर्थः ॥

इति भट्टभास्करमिश्रविरचिते तैत्तिरीयारण्यकभाष्ये

अष्टमप्रपाठके द्वादशोऽनुवाकः.

सम्पूर्णमारण्यकम्.

# अशुद्धशोधनम्.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ८ | १ | रतः। | रेतः। |
| २४ | ६ | मरुद्भि | मरुद्भिं |
| ४४ | ४ | पीपिहि। | पीपिहि। |
| ५१ | ३ | याऽग्नीध्रे। | याऽऽग्नीध्रे। |
| ६० | ५ | ,, | ,, |
| ९० | ७ | धेहि | देहि |
| १०६ | ८ | देवभ्यो | देवेभ्यो |
| १०९ | ७ | द्यवा | द्यावा |
| ११२ | ५ | गृह्याय- | गृह्यार्य- |
| ११८ | ४ | मखांय | मखाय |
| १२४ | ७ | मवैता | मेवैता |
| १३० | २ | वंक्षन्ते। | वैक्षन्ते। |
| १३१ | १५ | स्तंन | स्तनं |
| १४३ | ,, | रक्षोहा। | रक्षोहा। |
| १४४ | ११ | पर्यैति। | पर्यैति। |